# प्राच्यपाश्चात्यान्वीक्षिकीसमीक्षितानुमान-विषये किञ्चित् ।

(तृतीयाङ्के प्रकाशितादग्रे)

ले०—काशीस्थरणवीरपाठशालाऽध्यक्षाः साहित्याचार्यन्यायशास्त्रि-
एम्० ए० बी० एल्० पं० वीरमण्युपाध्यायाः ।



पक्षवृत्तिसपक्षवृत्तिविपक्षाऽवृत्ति इति यावल्लिङ्गमनुमापकं भवतीति निष्कर्षः प्रथमस्य पद्यस्य । त्रिविधाद्रूपाद्विपरीतं रहितं साध्यविशिष्टस्याऽधिगमे लिङ्गं न भवति इति द्वितीयस्य पद्यस्य निष्कर्ष इति काश्यपाचार्य्योऽब्रवीत् । एतदेवाह सूत्रकारः—अप्रसिद्धोऽनपदेशोऽसन्, सन्दिग्धश्चेति । अत्र 'अप्रसिद्ध'पदेन विरुद्धाऽसाधारणयोः परिग्रहः । तयोः साध्यधर्म्मेण सह प्रसिद्ध्यभावादहेतुत्वम् । असन्निति पदेनाऽसिद्धस्याऽवरोधः, स हि सपक्षे साध्यधर्म्मेण सह जातु प्रसिद्धोऽपि धर्म्मिणि पक्षेऽवर्त्तमानोऽहेतुरेव । सन्दिग्धश्चाऽनैकान्तिकाभिधानम् । स हि धर्म्मिणि दृश्यमानः किं साध्यधर्मसहचरितः किं वा तदसहचरित इति सन्दिग्धो भवति । एवं न पुनरेकं धर्ममुपस्थापयितुं शक्नोति । इत्थञ्चोभयथा दृष्टत्वादहेतुः पर्य्यवसितो भवति । एवं विरुद्धासाधारणासिद्धानैकान्तिका हेत्वाभासाः सूत्रकृता स्पष्टं व्यवस्थापिताः ।

एवम्पर्य्यालोचनेन भाष्यकृद्भिः प्रसिद्धिरेव व्याप्तिरिति प्रदर्शितमिति व्यवस्थापथमवतरति । तामेव व्याप्तिमविनाभावसम्बन्धं साहचर्य्यनियमं वेति बहुधा सङ्गिरन्ते प्राचीनदार्शनिकतत्त्ववेत्तारः । अभिनवनयतर्कवक्रवर्त्मानुगामिनस्तु अनल्पकल्पकल्पनागुम्फितैः शब्दनिचयैः प्रवर्णयन्ति तल्लक्षणं बहुधा यदिह विस्तरभियाऽनुपयोगाच्च परित्यज्यते ।

प्रत्ययप्रकारस्तु—प्रशस्तपादैरित्थं वर्णितः । विधिस्तु व्याप्त्यानुमेयो यत्र धूमस्तत्राग्निरग्न्यभावे धूमोऽपि न भवति इति । एवं प्रसिद्धसमयस्यासंदिग्धधूमदर्शनात् साहचर्यानुस्मरणात् तदनन्तरमग्न्यध्यवसायो भवतीति । अस्यार्थस्तु यत्र धूमस्तत्राग्निरग्न्यभावे धूमाभावः इत्यन्वयव्यतिरेकव्याप्त्या प्रसिद्धसमयस्य प्रसिद्धाविनाभावस्य पुरुषस्यासंदिग्धधूमदर्शनात्,

धूम एवाऽयं न बाष्पादिकमिति ज्ञानात्साहचर्य्यानुस्मरणात्, अर्थात् यत्र धूमस्तत्राग्निरित्येवमनुस्मरणात् तदनन्तरमग्न्यनुमानम्भवतीति ।

नन्वेवं द्वितीयो लिङ्गपरामर्शो न लभ्यते, मालम्भि; न हि नस्तेन प्रयोजनम्, लिङ्गदर्शनव्याप्तिस्मरणाभ्यामेवानुमेयप्रतीत्युपपत्तेः इति कन्दली । अत्रानुमेयप्रकारप्रदर्शकवैशेषिकग्रन्थतद्व्याख्यानकन्दलीग्रन्थाभ्यां लिङ्गपरामर्शो न कारणं केवलं व्याप्तिस्मरणं लिङ्गदर्शनं च कारणमनुमितेरित्यध्यवसेयम् ।

गौतमेनापि अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो दृष्टञ्चेति सूत्रितम् । एतत्सूत्रोपरि तत्पूर्वमिति प्रतीकमुपादाय तत्पूर्वमित्यनेन लिङ्गलिङ्गिनोः सम्बन्धदर्शनं लिङ्गदर्शनं चाभिसम्बध्यते, स्मृत्या लिङ्गदर्शनेन चाप्रत्यक्षोऽर्थोऽनुमीयते इत्युक्तं वात्स्यायनेन । अत्र तत्पूर्वकमित्यस्य प्रत्यक्षपूर्वमित्यर्थः । प्रत्यक्षञ्च महानसादौ सपक्षे लिङ्गलिङ्गिनोः सम्बन्धस्य पक्षे लिङ्गस्येति सम्बन्धदर्शनेन प्रसिद्धिरेव व्याप्तिरित्यनेनाप्यङ्गीकृतम् । स्मृत्या प्रसिद्धलिङ्गस्मृत्या पक्षे लिङ्गदर्शनेन चाप्रत्यक्षस्यार्थस्यानुमानमित्युक्त्या परामर्शो न दर्शितस्तेन न सकारणमिति सूत्रभाष्यसमालोचनया लभ्यते । परामर्शश्च व्याप्तिविशिष्टपक्षधर्मताज्ञानं वह्निव्याप्यधूमवानयमित्याकारकं नव्यग्रन्थेषूपदर्शितम् ।

व्याप्तेः परामर्शस्य चोपदर्शका अर्थादुत्थापकाः पञ्चावयवा अनुपदमेव वक्ष्यन्ते । एवमवयवोत्थापितहेत्वाभासादिरहितपरिशुद्धव्याप्तिपरामर्शजन्यमनुमानमित्यनुमानस्वरूपं पर्य्यवसितम् । पाश्चात्यप्रादुर्भूतानेकनैयायिकानां निरुक्तानामनुमानलक्षणानां विचारेण ज्ञातपूर्वार्थज्ञानादनिन्द्रियजन्यं ज्ञानमनुमानमित्येवंविधं लक्षणं पर्य्यवस्यति । यथा पृथिव्यां पशुपादपङ्क्तिभिस्तत्प्रदेशे पशुप्रचारोऽनुमीयते । अत्र पशुपादपङ्क्तयः पूर्वमेव तत्त्वेनावधारिताः, तत्प्रदेशे पशुप्रचाररूपं ज्ञानमुद्भावयन्ति । एतदेवानुमानस्वरूपं पाश्चात्यानाम् ।

अत्रेदं विचार्यम्—यदेतदनुमानस्वरूपं तल्लक्षणञ्चासद् सद् वेति । लक्षणेन तल्लक्षितेन स्वरूपविवरणेन चाव्याप्त्यतिव्याप्त्यादिदोषदूषितेन नावश्यं भाव्यम् । प्रस्तुतञ्चेदमनुमानप्रमाणलक्षणं बहुशो विमृश्यमानमपि विविधदोषभाजनतामागेव प्रतिभाति । एतद्धि प्रथमन्तावत्स्मृतावेवा-

तिव्याप्तम् । यथा श्रीमान् माननीयमालवीयदर्शनमात्रेण तत्रभवतां तेषां नैसर्गिकस्वार्थत्यागस्य परप्रयोजनसम्पादनपरतायाश्चोदाहरणीभूततया तदीयसम्बन्धवद्धस्य विश्वविद्यालयस्य स्मृतिरुत्पद्यते । श्रीमन्मालवीयप्रत्यक्षरूपज्ञानाद् जातायाः एतस्याः स्मृतेरनुमानत्वमापद्येत । न च स्मृतेरनुमानत्वं प्राच्यैः पाश्चात्यैर्वा तार्किकैरुररीक्रियते । स्मृतिर्हि प्रणिधानादिलिङ्गोद्बुद्धात्संस्काराद्नुभूतस्यैव भावस्य भवति । तथा हि भगवता गौतमेन प्रणिधाननिबन्धाभ्यासेत्यादिसूत्रं निरमायि । एवञ्च नहि अदृष्टकाश्मीरो विचक्षणोऽपि पुरुषः काश्मीरं स्मर्तुं शक्नोति । अनुमानस्य तु पूर्वमननुभूतेऽप्यर्थे गतिर्विद्यत एवेत्यस्ति तयोर्वैलक्षण्यम् । प्राच्यन्यायनये तु परामर्शजन्यज्ञानत्वाभावान्न स्मृतेरनुमानत्वप्रसक्तिः ।

अपरञ्चोच्चरिते घटशब्दे घटेतिवर्णचतुष्टयघटितसमुदायशब्दस्य श्रवणेन्द्रियद्वाराऽवगमः, परन्तु कम्बुग्रीवादिमत्पदार्थोपस्थितौ तु पूर्वोक्तलक्षणसमन्वयादनुमानप्रमाणमेव कारणं भवेत् । न चेष्टापत्तिरनुभवविरोधात् । नहि घटशब्द उच्चरिते तत्पदार्थोपस्थितिरनुमानप्रमाणप्रयोगपूर्विकाऽगृहीततदभिधेयसंकेतानां मानवानां जायते । अस्माकं मते तु शब्दार्थयोरविनाभावरूपव्याप्तेरभावान्नानुमानम् । अविनाभावाभावश्च प्राप्तस्वर्गापवर्गाणामपि पुरुषाणां युधिष्ठिरादीनां तत्तदभिधेयाभिधानवतां शब्दानामद्यापि प्रत्यहः प्रयोगात्प्रकटमेवावधार्य्यते ।

किञ्च गङ्गायां घोष इत्यत्र पूर्वोक्तोदाहरणदिशा न केवलमभिधेयोऽपि तु गङ्गातट इत्याकारो लक्ष्यः शीतत्वपावनत्वादिविशिष्ट इत्येवंविधो व्यङ्ग्योऽप्यर्थोऽनुमेयत्वगणनायामेव गतार्थो जायेत । ननु भवतु भारतीयदर्शनाभ्यासशुभ्रप्रतिभानामनभिमतमेतत्, पाश्चात्यतार्किकाणान्त्विष्टापत्तिः, तेषान्तथैव स्वीकारादिति चेत्? सत्यम्, यत् सर्वे मनुष्या द्विपादः इत्यस्मात् केचिद् द्विपादो मनुष्याः इत्यर्थोऽनुमेयत्वेन पर्य्यवस्यतीत्येवं ते संमन्यन्ते । एतज्जातीयानां पर्य्यवसिताभिप्रायाणां आब्वर्शन्-कन्वर्शनादिसंज्ञाश्चाभिदधति । किन्तु एतादृशास्समस्ता अनुमेयत्वेनाङ्गीकृता अपरे च नानाविधा अर्थाः प्रचुरं विचार्य्यमाणाः शक्यलक्ष्यव्यङ्ग्यान्यतमेष्वेवार्थेष्वन्तर्भविष्यन्ति इति शब्द एव शक्तित्रयमुररीकृतं भारतीयतार्किकैः ।

पाश्चात्यास्तु त्रिविधानेतानर्थान् व्यवहारे प्रयुञ्जन्ति। किन्तु तत्प्रयोजिका-शक्तयस्तु तैर्नावगता अद्यावधि। ननु पाश्चात्यदर्शनेष्विवानुमानप्रमाणेनैव कार्य्यनिर्वाहे किं शक्तित्रयस्वीकारेणेति ? मैवम्, शक्तेरस्वीकारोऽनाघ्रात-दर्शनशास्त्रकुसुमसुरभित्वं भवतो द्योतयिष्यति। कर्कशतर्कनर्मोक्तमर्मावयवा नैयायिकनेतारो वैयाकरणविचक्षणा मीमांसकमणयस्साहित्यतत्त्वाव-गन्तारश्च महताऽवधानदानेन शक्तिमेतां परितः परिपालयन्ति। ओजस्विना प्रयासेनाऽपि तामायासयितुं न नरस्य कस्यापि फलवती प्रवृत्तिः प्रवर्त्तेत। अनुमानप्रमाणदण्डेन व्यञ्जनविवासनाय सपरिश्रमं ग्रन्थमेकं प्राच्येष्वपि महिमभट्टो घटयामास। एतद्धि निम्नलिखितयाऽऽर्यया बुध्यते।

"अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्॥"

परन्त्वेतन्मतमपि तम इवाम्बरमणौ नभोमध्यमधिष्ठिते मम्मटनिर्मिति-काव्यप्रकाशे विशीर्णतामलभत। तत्र व्यञ्जनया अनुमानत्वोपन्यासस्समूल-तया निरस्तः। तदुक्तप्रकारेणैव पाश्चात्यतर्कप्रतिपादितानि अन्वयदर्शन्-कन्वयदर्शन्रूपानुमानानि अनुरणनरूपव्यञ्जनादिविशेषाणि निराकरणीया-नीति दिक्। अन्यच्च लक्षणे ज्ञातज्ञानशब्दप्रयोगो दृष्टः—अत्रेदं प्रष्टव्यम्, किं ज्ञानशब्देन प्रमाज्ञानमप्रमाज्ञानं वाऽऽभिप्रेतम् ? द्वितीये प्रमात्मक-ज्ञानाज्जायमानं ज्ञानमग्राह्यम्भवति। प्रथमे सा प्रमा अनुमितिरूपा प्रत्यक्षरूपा वा। आद्ये अनुमानप्रमाणजन्ये ज्ञानेंऽशे आत्माश्रयदोष-सम्भवः। अथ च ज्ञातेति भूतकालिकम्, सम्भवति च जायमानज्ञानादप्य-नुमानं यथा विस्फूर्जन्तमहिं दृष्ट्वा नकुलवान् प्रदेश इत्यादि। यथा वा यन्त्रात् क्षरज्जलमवलोक्य नैष दशवादनसमय इति।

ननु विद्यत एव दशवादनसमयात् प्रागेव जलं क्षरत्येतत् साधारणं भूतकालिकं तत्राऽपि ! अस्त्येवं परन्तु यद्येतद् व्याप्तिज्ञानं साधनत्वेना-पेक्ष्यते तर्हि लक्षणे तस्य निवेशे कथं लजन्ते भवन्तः ? यद्विना नितरामनियतमपरिपूर्णञ्च व्यभिचारि भवदीयं लक्षणम्। अपरञ्च सत्यपि भूतकालिके दशवादनसमयात्प्रागेव जलं क्षरतीत्येतत्साधारणज्ञाने अनुमानावधितत्समयजलक्षरणज्ञानमनुमितौ सहकारि सद् गृहीते ज्ञान-शब्दे लक्षणेऽव्याप्तिदोषमुद्घोषयति।

—

(सावशेषम्)

## यमुनाऽन्योक्तयः ।

ले० — मुजफ्फरपुरस्थराजकीयसंस्कृतकालेजाध्यापकाः पं० बदरीनाथझाशर्माणः ।

जीमूतेन विमुक्तं मुक्ताशुचि यत् पयः प्रकृत्याऽऽसीत् ॥
अपि तन्निजसम्पर्कात् कालिन्दि ! त्वं मलीमसयसि ॥ १ ॥

छाया-प्रभाकराभ्यां जनिताया लोकवन्दनीयाभ्याम् ॥
कालिमकौटिल्ये तव कथय कुतस्त्ये परं यमुने ! ॥ २ ॥

कृष्णे ! कृतं तरङ्गैस्तव महिमानं तदैव जानीयाम् ॥
गङ्गासङ्गमनात् परमप्यात्मानं प्रकटयेश्चेत् ॥ ३ ॥

कालिन्दि ! किमवलिम्पसि कज्जलमलिनेन हन्त पूरेण ॥
द्रक्ष्यस्यचिरादोघं सुरसरितो हीरकप्रतिभम् ॥ ४ ॥

यमुने ! बिभर्षि मोघं मसीसवर्णौघभारमश्रान्तम् ॥
मज्जन्तमपि न मां यदि कृष्णीकर्तुं समर्थाऽभूः ॥ ५ ॥

को जानीयाद् वन्यं कलिन्दमवनीभृतामिहान्यतमम् ॥
कालिन्दि ! लोकवन्द्ये ! त्वं चेन्नैवोद्भवेस्तस्मात् ॥ ६ ॥

उद्भाविताः क्षितिधरैः परस्सहस्रा न किं तरङ्गिण्यः ॥
कालिन्दि ! का त्वदन्या प्रथयति सञ्ज्ञां पितुः परितः ॥ ७ ॥

मगधाङ्गवङ्गगर्हित - नीवृत्सञ्चरणाद् भिया प्रयागे ॥
सुरसरिति साधु कृष्णे ! धर्मसतृष्णे ! निलीनाऽसि ॥ ८ ॥

कृष्णैकनिरतचेतः ! कृष्णे ! तव कृष्णतैव साधिष्ठा ॥
शिरसा बभार गङ्गां गौरीं गौरीपतिर्हि परः ॥ ९ ॥

बहवो वहन्तु सरितो वहन्तु परितो ,महान्तमप्योघम् ॥
वृन्दाविपिनविलोकन-भाग्यं यमुने ! त्वयैवाप्तम् ॥ १० ॥

---

## पिकान्योक्तिः ।

प्राप्तेऽद्य नूतनरसालविकासकाले जाड्ये गते च सकले विलयं जनानाम् ।
पीयूषतुल्यमुपदेशवचः किर त्वं मा मौनमेहि पिक ! माऽवसरं च मुञ्च ॥

पं० खिस्तेबटुकनाथशर्मसाहित्यशास्त्रिणः, काशी ।

# यथैतत्ते रोचते ।

ले०—पँढरकरोपाह्व पं० गोपीनाथशास्त्रिणः, साहित्याचार्याः ।
( हेडपण्डित—गवर्नमेन्ट हाइस्कूल, बांदा )

—— ० ——

आसीत् पुरा क्वचित् "फ्रान्स"नामकम्लेच्छविषयैकप्रान्तेऽतिकुटिलमतिः कपटप्रचुरानेकविधघटनापटुः कृतान्तो नाम कश्चन सामन्तः, यः किल राज्यस्य न्यायतोऽधिकारिणं दयादाक्षिण्यशौर्य्योदार्यादिविविधस्वामिगुणसम्पन्नं नीतिपरं सज्जनमनन्तनामानं स्वज्येष्ठभ्रातरं राज्याच्च्यावयन् देशान्निरवासयदभुनक् च स्वयमेव तद्राज्यम्। न खलु किमपि दुष्करं दुष्कृतिपूर्णचेतसां दुर्धियाम्, यतः—

किं किन्न कुर्वते पापं दुष्टाः पापरता नराः ।
निर्भयास्सञ्जिघांसन्ति मातरं पितरं तथा ॥
का कथा बन्धुवर्गस्य देशनिर्यातनस्य वा ।
न किञ्चिद्विद्यते तेषामानृशंस्यं कथञ्चन ॥

शान्तचेता अनन्तोऽपि दैवदुर्विलसितमिति धिया राज्यच्युतिदेशनिर्वासनजं स्वप्रियविरहजञ्च दुःखमविचिन्त्यैव पुरातना ऋषिकल्पा नृपतय इव "अर्दन"नामकेऽतिगहने कानने—आत्मसमप्राणैर्विश्वस्तचरणैः कतिभिश्चन परिमितैरनुचरैस्समं ससुखं ससन्तोषञ्च न्यवसत्। तत्रापि प्रीतिपात्राणि तदर्थं परित्यक्तराज्यवैभवानि स्वयमेव देशनिर्वासनमङ्गीकुर्वन्ति कतिचनाभिन्नहृदयानि मित्राण्यपि तमनुययुः। अहह ! प्रेमैव खलु निखिलस्य जगतो व्यवहारस्य परं निदर्शनं सारासारविचारमनसां सुकृतिमतां विवेकिनामस्मिन्नसारे संसारे। प्रेम्णैव किलाज्ञानधियो जडा अपि पशवो वशंवदा भवितुमर्हन्ति किमुत ज्ञानेन्द्रियकर्मेन्द्रियविशेषशक्तिसम्पन्नास्सारमसारं वेति विवेचनप्रभवो मनुजाः। अहो प्रभावस्स्नेहस्य !

असारे संसारे सरसमतनु प्रेम नु नृणां
मनांस्यावध्नाति प्रसभमथ दुःखार्तमनसाम् ।
विचित्रं प्रेमाख्यं जगति खलु रत्नं विरचितं
विवेकी तद्रक्षेद्धृदयपुटकोषान्तरगतम् ॥

अस्तु, प्रकृतिरपि तान् सर्वांस्तथैवाशु निरगापयत्, यत्ते दर्शनीयात् बाह्यप्रेमपरिपूर्णात्प्रचुरचाटुकारिताश्रयात्परसुखात्तस्मात्सामन्तजीवनाद-पेक्षया वनौकसामकृत्रिमशान्तरसाप्लुतं तदेव जीवनं बहुमन्यन्त, ससुखं न्यवसंश्च तत्र चिरन्तनान् वानप्रस्थाश्रमानुजीविनो मनुजाननुकुर्वन्तः। तदनु प्रत्यहमनेकशो युवानोऽपि स्वाप्रतिमवैभवसुखं विहाय तत्रैवागतवन्त-स्तैस्समं पुरातनं स्वर्णयुगमिव मन्यमानाः सुखेन कालं यापितवन्तश्च।

ततः प्रखरतरविकिरणसन्तप्तपांसुपटले कराले ग्रीष्मर्तौ सघन-शीतलच्छायेषु तरुष्वधस्तादुपविशन्तो वनौकसां भयानकानां श्वापदानां मृगयाविहारादीरतिरमणीयास्तास्ताः क्रीडा अनुभवन्तः, तस्मिन्नेव सघने वने निवसतोऽनेकविधवर्णैश्चित्रिताङ्गान्नानाविधान् कृष्णसारप्रमुखान् असंख्यान् मृगाननिच्छया च स्वोदरपूर्तये जिघांसमाना अत एव शोका-पूरितमनसश्च सन्तस्ते तत्र यथासुखं कालं विनिन्युः।

तदनु वर्षासु, पूर्वं मनसो नयनयोश्चानन्दप्रदमतिस्निग्धदलितेन्द्रनीलम-णिश्यामलताप्रचुरसुषमं सघनश्यामच्छायैस्तडित्वद्भिरम्बुवाहकैर्घनैराच्छन्नं गगनतल,मध्यवसायभीरूणामनुद्योगिनां वा लक्ष्मीमिव चञ्चलां समुल्ल-सत्तरलकान्तिं चपलामितस्ततोऽनुचरणं समुज्ज्वलन्तीं च विलोकयन्तो भृशमनुभूय मुदं ततश्च मन्दं मन्दमभिपतत्सु वर्षाविन्दुषु पुनः क्रमेण तुमुले रणाङ्गणे परस्परं विजिगीष्वोरनवरतं बाणवृष्टिभिः प्रसभं नियुद्ध्य-मानयोः कयोश्चिद्वीरयो राज्ञोरिवासहनीयप्रभावायाः निरन्तरं प्रखरतर-मसहनीयं करमभिनिपात्यातिसन्तापितप्रजावर्गाया ग्रीष्मर्तुमहिष्या उपरि अविरतं धारासम्पातानभिवर्षन्तीषु वर्षासु तेऽपरिहार्यं स्वप्रियपरिजनविरह-जनितं परमं दुःखावेगं च जातुचिदसहन्त।

एवं शीतर्तौ च हिमजलशीतलस्पर्शा अरुन्तुदा वाता राजानं सपरिजनं वस्त्राणामभावात्स्वशीतस्पर्शैस्तुदयन्तस्तदीयां विपन्नां दशां च तमनुभावयन्तो यदा ववुस्तदा नृपतिस्तान् हठाद्विषह्यैवं व्यचिन्तयत् यत् 'इमेऽतिशीतस्पर्शा वाताः सत्यं मम मन्त्रिण इव मां प्रतिभान्ति, ते च खलु न चाटुकारितापराः परं मामकीनां यथार्थामवस्था-मेव मां नूनं बोधयन्ति। यद्यपि ते मां दशन्त इव प्रतिभान्ति तथापि तेषां स्वोदरम्भराणाम्मन्त्रिणां निष्ठुरतायाः कृतघ्नतायाश्चापेक्षयैषां वात-

मन्त्रिणां दशनास्तीक्ष्णतराग्रधाराः कथञ्चन न विद्यन्ते । अहन्तु मन्ये, यल्लोकाः सततं प्रतिकूलतया विपदो निन्दन्ति परं तीव्रतरासह्यविषयुतस्य कस्यचिन्महतो मण्डूकस्य मस्तकाल्लब्धानि कठिनतरमहाकालविषापहरणसमर्थान्यमूल्यानि रत्नानीव ताभ्योऽपि विपद्भ्यो मधुरतरा लाभप्रदाश्च सदुपदेशा एव लब्धुं शक्यन्ते' ।

विपदभिभूतास्वेवंविधास्वपि तास्ववस्थासु सधीरमेव विचिन्तयन् स सामन्तः पुरोदृश्यमानेभ्यः सर्वेभ्योऽपि पदार्थेभ्यश्चारुतरं लाभप्रदञ्चोपदेशञ्जिघृक्षुस्तदभितः प्रसृतानां तरूणां, निर्झराणां पाषाणानाञ्चामानुषीभ्यो वाग्भ्यस्सदुपदेशपरान् पाठानेवापिपठिषत् ।

( अवशिष्टमग्रे )

अनेकनरपतिमुकुटमणिनीराजितचरणकमलानां ग्वालियरराज्यसिंहासनमलङ्कुर्वतां सिन्देवंशविभूषणानां श्रीमतां जार्जजिवाजिरावमहाराजानां विंशतितमे वर्षप्रवेशे

## शुभाशीर्वचनम् ।

श्रीमज्जिवाजिनृपतिं प्रियशस्त्रशास्त्रं
दक्षं नये जनहितैकविधानलक्षम् ।
प्रेष्ठं विदां परपुरञ्जयबद्धकक्षं
संरक्षताद्विभवदो भगवान्महेशः ॥ १ ॥

भास्वल्लक्ष्करभास्करः करचयैराकृष्य सारं परं
लोकानामुपकारकोऽसि समये वर्षन्यथा स्वं नयैः ।
आरोग्याखिलभाग्यभोग्यजनकः साम्बाकुटुम्बश्चिरं
जीया जीवय तुष्य तोषय यशश्चिन्वन्प्यशेषं प्रभो ! ॥२॥

राजन् ! रमा विहरतां तव कोषदेशे
मौलौ हरिर्वदनसीम्नि सरस्वती च ।
बाह्वोर्जयो मनसि धर्मविधानभावो
भक्तिर्भवे च जननीसहितः सुजीयाः ॥ ३ ॥

ग्वालियरस्थराजकीयसंस्कृतमहाविद्यालयप्रधानाध्यापकानाम्,
मुसलगाँवकरोपाह्व—पं० सदाशिवशास्त्रिणाम् ।

# अमरभारतीमहिमा ।

ले०—पं० गोपीकृष्णशास्त्रिणः, व्याकरणाचार्याः काव्यतीर्थाश्च ।
( संस्कृताध्यापक, माधव कालेज, उज्जैन )



अयि गीर्वाणभारतीरसास्वादनचातुरीमश्नन्तो वाग्लतालवालकल्पा विभूषितवसुन्धरा विद्वद्वराः !

अस्ति विदितमेव तत्रभवतां भवतां, यत्किल सर्वोऽपि जीवलोकः परस्परं स्व-स्व-हार्दिकभावानां प्रकाशनाय कण्ठताल्वाद्यभिघातजन्य-व्यक्तध्वनिरूपाकारादिवर्णकदम्बजनितशब्दकदम्बप्रवाहरूपां व्यक्तां तथा केवलं स्वजातीयजीवेषु स्वाभिप्रायमात्रप्रकाशनक्षमां कामप्यव्यक्तां वा भाषामपेक्षते । तत्र व्यक्तवाचो हि मनुजास्तदितरे चाव्यक्तवाच इति सर्वत्र प्रसिद्धिः । तत्र व्यक्तैव वाक्तावदस्माकं निबन्धे विचारगोचरेति तामेवावलम्ब्यायं विचारः प्रस्तूयते ।

तत्र सर्वप्रथमं भाषायाः कदा प्रादुर्भाव आसीदित्यस्मिन्विषये विकासवादसंप्रदायवादिनो यद्यपि कामपि कपोलकल्पितामुपपत्तिं प्रदर्शयितुमग्रेसरा भवन्ति, परन्तु शब्दब्रह्मणो नित्यतां प्रागभावाप्रतियोगित्व-विशिष्टध्वंसाप्रतियोगित्वरूपाम्—

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥"

तथा "शाब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इत्याद्यभियुक्तोक्तदिशा विजयडिण्डिमपुरस्सरं घोषयतामस्माकं पुरस्तात्स सिद्धान्तः खल्वापातरमणीयतां बिभर्ति । अभ्युगमेऽपि वा तस्य राद्धान्तस्य सर्वसम्मत्याऽस्मदाराध्याया अस्या देववाण्या एव सर्वप्राथम्यं निष्टङ्कं सिध्यति । इदमपि न विस्मर्तव्यमार्यसन्तानैरस्माभिर्यत्किलेयं सुरभारती भारतीयविज्ञाननिधिप्रपूरिताऽसन्दिग्धप्रामाण्यपट्टाभिषिक्तवेदवेदाङ्ग-पुराणेतिहासदर्शनकाव्यकोशधर्मशास्त्रायुर्वेदादिविविधविलक्षणविषयविभूषिता सर्वस्वमेवास्माकं भारतीयानाम् । भारतीयसभ्यताया आदर्शभूतानां ब्रह्मर्षिदेवर्षिराजर्षिवर्याणां निरन्तरप्रत्यक्षीकृतात्म-

स्वरूपाणां योगाभ्यासजन्यालौकिकज्ञाननिधिरस्यामेवामरभारत्यां सुगुप्ततरो वरीवरीति। पश्यन्तु भवन्तोऽस्याः सुरगिरोऽलौकिकं रमणीयं च चमत्कृतिजनकं परमैश्वर्यं निष्पक्षपातरम्यया दृशा, यदस्याः शब्दभाण्डागारं सर्वथाऽक्षयतां बिभर्ति। अत्र खल्वसंख्याः शब्दा येषां पारायणमपि वर्षशतकेन कर्तुं न पार्यते। यामुद्दिश्य व्याकरणमहाभाष्यकारेण भगवता पतञ्जलिना प्रोक्तम् "अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः। एवं हि श्रूयते—बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम। यस्सर्वथा चिरं जीवति वर्षशतं जीवति। चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति, आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति। तत्र चास्यायुः स्वाध्यायकालेनैव कृत्स्नं पर्युपयुक्तं स्यात्। तस्मादनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः" इति। ऐश्वर्यं कीदृशमस्ति संस्कृतभाषाया इत्येतद्भवद्भिरेतेन पातञ्जलमहाभाष्यवचनेन सम्यग्ज्ञातमेव स्यात्। ईदृश्या समग्रशब्दसम्पत्तिसमेधितकोशया भाषया स्वल्पशब्दसंचालितप्रयोगसंकोचसंकुचितानां भाषाणां कः कृती साम्यमुपपादयेत्! काऽस्त्यस्मिन्भूमण्डले संस्कृतान्या काचन वाग्यस्यां किलार्षज्ञाननिधिर्भगवतो नारायणस्य शब्दमय स्वरूपं चतुर्धा प्रविभक्तात्मा वेद इव पुरुषार्थचतुष्टयपूर्तिं ज्ञानकर्मप्रकरणाभ्यां कुर्वाणो ग्रन्थः कश्चन वर्तते! अहो!! वेदविस्तारः कीदृशो यदत्रैकशतं शाखा यजुर्वेदस्य सहस्रं सामवेदस्यैकविंशतिः ऋग्वेदस्य नव चाथर्वणो जाग्रतितमाम्। यदीयं च प्रामाण्यं "वेदाः प्रमाणम्" इत्यभियुक्तोक्त्या निस्सन्दिग्धमङ्गीक्रियतेऽस्माभिः।

अयि विद्वांसः! का वा जागर्त्यत्र भूवलये सुरभारतीतराऽपरा भाषा, यस्यां खल्विन्द्रचन्द्रकाशकृत्स्नाऽपिशलिशाकटायनपाणिन्यमरजैनेन्द्रसदृशाः शब्दशास्त्रप्रवर्तका आचार्यचूडामणयः कात्यायनपतञ्जलितुल्याश्शब्दानुशासनव्याख्यातारो वा समभूवन्! शक्यते किं वक्तुं केनापि विचक्षणेन यदिह जगति जयति संस्कृतेतरा काचन भारती, यस्यां कणादगौतमवात्स्यायनगङ्गेशोदयनाचार्यगदाधरजगदीशमथुरानाथसमानतां बिभ्राणाः गम्भीरविचारविधातारो न्यक्कृतविबुधाचार्यास्तर्ककर्कशचञ्चातुरीसमातुरीकृतवादिव्रातविमर्दिनो मान्याः स्वकृति-

भिरखिलं संसारं चमत्कृतवन्तो यशस्वन्तस्तार्किकाः समजायन्त ! श्रीमद्भिः किं कदाऽपि श्रुताऽनुभूता वैतादृशी काऽप्यन्या वाक्, यस्यां व्यासजैमिनिकपिलादिसाम्यभाजो दर्शनप्रणेतारस्तथा श्रीमच्छंकराचार्य-तुल्योऽद्वैतसिद्धान्तप्रतिपादकः, रामानुजयतीन्द्रसमो विशिष्टाद्वैतसिद्धान्त-समर्थको मध्व-निम्बार्क-वल्लभाचार्यसदृशाः श्रीमद्भगवद्भक्तिपीयूषास्वादन-तर्पितनिखिलजीवलोका दार्शनिकशिरोमणयः प्रादुरासन् ! यस्याश्च दर्शनेषु परिणामवादः, विवर्तवादः, आरम्भवादः, सत्कार्यवादः, असत्कार्यवादः, एकेन्द्रियवादः, नेत्रैक्यवादः, देहात्मवादः, इन्द्रियात्मवादः, चित्तात्मवादः, बुद्ध्यात्मवादः, आनन्दात्मवादः, ब्रह्मात्मवाद इत्यादयो विलक्षणाश्चेतश्चमत्कृतिजनका विषया विराजन्ते ! अस्मिन् महत्तमे ब्रह्माण्डे किं कोऽपि बुध ईदृशं वाक्चापल्यं विदधीत, यत्किलास्ति जगन्मण्डले गीर्वाणवाणीतरा काचिदेवंविधा वाक्, यस्याः साहित्य-संसारे व्यासवाल्मीकिसमौ दिव्यचरित्रचित्रणकलाकुशलौ पूर्णज्ञानवन्तौ काव्यगगनस्य सूर्याचन्द्रमसाविव महाकवयितारौ समजायेताम् ! गुणाढ्य इवाद्भुतबृहत्कथाकथाकलापचमत्कृतकृतिसमूहो महाकविरुदपद्यत ! भारत्यपरावतारः कविकुलगुरुः ललितकाव्यकलाकोविदः एकतमयैव शाकुन्तलनाम्न्या स्वीयरचनया भारतदेशमसभ्यत्वेन संयोजयतां सपरिकरं समर्थयतां चाल्पमतीनां पाश्चात्यनिन्दकानां मुखमुद्रणं कुर्वन् कालिदाससमः कोऽपि कविः प्रादुरासीत् ! बाणतुल्यः प्रौढभाषालेखनेन नवनवकल्पनापाटवेन च सहृदयहृदयसमाह्लादनचातुरीचणः कवि-रुदभवत् ! भवभूतिरिव करुणरसमयवाक्प्रवाहनिमज्जितसमस्तभावुक-हृदयो भावुककविरजनि ! महाकविदण्डिवत्कोमलकान्तपदावलीसंग्रथन-पटुः कविकोकिलः समजायत ! श्रीहर्षसमानः स्वीयप्रौढतमपाण्डित्य-प्रतापवलयिततरुणतरमार्तण्डमण्डलः ललिततमरचनीकुशलः न्यक्कृता-खिलकविमण्डलः कोऽपि तार्किकः कविः प्रादुर्भूतः ! सुबन्धुरिव प्रत्यक्षर-श्लेषमयप्रपञ्चविन्यासवैदग्ध्यवान् कविवरो जनुरलभत ! भारविमाघ-पण्डितराजराजशेखरसमानाः कविकुलकमलदिवाकराः समभूवन् वा !

अयि मान्या वदान्या विपश्चिदपश्चिमाः ! अनन्ते ह्यस्मिन् संस्कृत-साहित्यरत्नाकरे प्रकाशमानानि काव्यप्रकाशरसगङ्गाधरध्वन्यालोक-

साहित्यदर्पणकुवलयानन्दालङ्कारकौस्तुभादीनि ग्रन्थरत्नानि स्वाध्याय-काले तज्ज्ञानां चेतसि कियन्तमाह्लादं जनयन्तीति तेषामनुभव एवात्र प्रमाणं न त्वत्र वागाडम्बरावसरः। तेषां सम्यक्तया ज्ञानं त्वद्य शतातिपाति। परमप्रसिद्धं भारतीयं ज्योतिर्विज्ञानमप्यस्यामेव भाषायां समुपनिबद्धम्। यत्र खलु त्रिस्कन्धज्योतिषमहार्णवपारदृश्वानो भास्कराचार्यार्यभट्ट-प्रभृतयो विद्वांसः प्रादुरभूवन्। किं बहुना !

यदत्रास्ति सुभाषायां तदेवान्यत्र विद्यते।
यन्नास्त्यत्र तदन्यत्र नास्ति सत्यं न संशयः॥

इयं किल सुरभारती न केवलं भारतीयजनतासमादरसौभाग्य-भाजनम्, अपि त्विमां पीयूषदर्पहारिणीं देवभाषामिन्द्रद्वीप ( इंग्लॅण्ड ) आश्वक ( आस्ट्रिया ) कुक्कुट ( बेल्जियम् ) स्वर्णभूमि ( अमेरिका ) क्रौञ्च ( जर्मनी ) रथक्रान्त ( आफ्रिका ) पारद ( चीन ) कुहका ( फ्रान्स ) दिनानादेशवासिभिः सादरं सकौतुकञ्च नित्यं प्रशस्यमानां शृणुमः। किञ्चैषा पुरा राष्ट्रभाषाऽप्यासीत्। यदि सम्यग्विचार्येत श्रीमद्भि-स्तर्हीयं मदुक्तिर्नासम्भवदोषदुष्टा भवेत्, यदियं न केवलं राष्ट्रियभाषा-पदमर्हति, किन्तु निखिलसंसारस्यापि यद्येका भाषा नियुक्ता भवेत्तदा संस्कृतभाषैव तदर्हा स्यादित्यलं सुखस्वप्रदर्शनेन। इदमपि श्रीमन्तो जान-न्त्येव यदियं सुरवाक् धर्मप्राणानामार्याणां नो धार्मिकभाषाऽप्यस्ति इति। तथा च यज्ञादिधार्मिकविषयोऽस्यामेव भाषायां विधीयन्ते। तत्र भाषा-न्तरप्रयोगे च "आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्" इति श्रौतनिषेधकवाक्यप्रामाण्येन प्रायश्चित्तीयत्वं सिध्यति प्रयोक्तुः। इति धार्मिकदृष्ट्या साहित्यिकदृष्ट्या च संस्कृतभाषाया इतराभ्यो भाषाभ्यो वैशिष्ट्यं सिध्यति। सेयं द्रवद्राक्षामधुरपदा सुरभारती कस्य नाम न मनोहारिणी ! अस्या रसस्त्वास्वादैकवेद्यः। अत्रैकं पद्यम्पुर-स्कृत्य विरम्यतेऽस्माभिः।

अमृतं मधुरं प्रोक्तममृतादपि संस्कृतम्।
अत एव च लोकेऽस्मिन् देवभाषेति कथ्यते॥ इत्यलम्।

---

सज्जीभूते सर्वस्मिन्वस्तुनि दत्तसंकेतस्स भूपकन्याप्रेमी द्वारमुद्घाट्य रङ्गभूम्यां समागतः । दृष्ट्वैव स्वश्रिया न्यक्कृतकामदेवमोजस्विनं महापुरुषाकारं तं सर्वेऽपि अव्यपक्षपातिनो नरा राजभीत्याऽनुच्चशब्दैस्तं प्रशशंसुः । समुपस्थितेषु जनेष्वर्धाधिकैरेवं रूपयौवनसम्पन्नोऽपि तेषां मध्ये कोऽपि वर्तत इति न ज्ञातमासीत् । 'रङ्गभूमावेवंभूतस्य प्राणिनो न्यायार्थमानयनमनुचितम्' 'किमाश्चर्यं यदि राजकन्या तस्मै स्पृहयेत्' इत्यादिवाक्यानि जनमुखान्निःसृतानि प्रसृतानि च सर्वत्र ।

नियममनुसृत्य, मध्ये समागत्य तेन भूपालोऽभिवाद्यः । परन्तु कामामृतपानमत्तस्यास्य कृते कोऽयं वराको भूपतिः । तस्येक्षणे क्षणाद्राज-दक्षिणपार्श्वे स्थितायां स्वप्रेमपात्रीकृतायां तस्यामेव संलग्ने ।

कन्यैषाऽप्यवश्यमेव स्वपितुरसभ्यतादिगुणमन्वकरोत् । अन्यथा कथं स्वप्राणप्रियसम्भावितप्राणापयानायां रङ्गभूमौ समागच्छेत् ! परञ्च स्वजीवनसुखैकमूले प्राणनाथे कष्टायां दशायामापतितेऽपि सा गृह-मेवाध्यासेदिति तु नानुमोदितं तस्या मनसा । अमुकापराधार्थममुको रङ्गभूमौ परीक्षिष्यत इति राजाज्ञाश्रवणक्षणादेवाऽहर्निशं विषयमेन-मतिरिच्य नान्यत्किमपि तया विचारितम् । राजकन्यात्वात्प्रभावशालि-त्वाद्विषयेऽस्मिन्संबद्धत्वाच्च तया यत्कृतं तन्न केनाप्यस्मादवसरात्पूर्वं समा-चरितम् । कस्य कपाटस्यान्तर्सिंहः कस्य च कन्येति तया सम्यग् ज्ञातम् । कन्याविषयेऽपि कस्येयं, कीदृशी वेति सर्वं तयाऽवगतम् । यद्यपि बालिकैषा सर्वाधिकसुन्दरी चानुपमरूपलावण्ययुक्तैवाऽऽसीत्तथापि तां साऽद्विषत् । स्वकपोलकल्पनाप्रपञ्चे नैकदा तया सा सुन्दरी स्वप्राण-नाथं प्रति कटाक्षपातं कुर्वन्ती दृष्टा । दृष्टञ्च तत्स्वीकृतिरूपं स्मितं स्वप्राणप्रियस्य मुखाम्भोजे । तयोश्च साधारणविषयमवलम्ब्य वार्ताला-पोऽपि कल्पनायां श्रुत एव । परन्तु कल्पनायामपि सर्वमेतदसह्यं संजातम् । राजपुत्रिप्रेमिणा सह साधारणजनदारिकायाः प्रणयसाहसं कथं मर्षितव्यम् ! भवतु साऽतीव सुन्दरी साक्षाद्रम्भैव, तेन किम् ! तस्याः स्मरणमपि द्वेष्यं संजातम् । अथ च सिंहनखविदीर्णवक्षस्थलं स्वप्रेमिणं प्रकल्प्यैव विभिन्नहृदया संजातवेपथुस्वेदा विषाभिभूतेव नष्टसंज्ञा संजाता । कथञ्चिल्लब्धसंज्ञा च सा पुनरपि लब्धसंकेतेन

स्वप्रणयिनोद्घाटितं कन्याद्वारमप्यकल्पयत् । विचारसरिद्धारायां वहन्ती सा, सुन्दर्यास्तस्या वैवाहिकीं क्रियां हर्षातिरेकश्चाऽन्वभवत् । तत्क्षणमेव संजातानल्पक्रोधा विस्फारितारक्तलोचना सा दन्तान् घर्षयन्ती केशान् कर्षन्ती साक्षात्कालिकेवाऽराजत । मम प्रेमी संकेतेन रङ्गभूम्यां मां कतमं कपाटमुद्घाटनीयमिति प्रक्ष्यतीति तया निर्धारितमासीत् । परन्तु कस्मिन्कपाटे संकेतो देय इत्यस्मिन्निश्चयेऽनेकनिशीथिनीरसुप्त्वैव संप्राप्य तयैको दृढनिश्चयः कृत आसीत् ।

यदा रङ्गभूमिगतः प्रणयी चिन्तासन्तानसन्दानितहृदयां स्वप्रेमैकस्थाननाशभीतिसंजातविवर्णामत एवानोजस्विनीं तां राजदारिकामपश्यत्तदा परस्परालोककाल एव प्रेमग्रन्थिग्रथितहृदयैकसम्भवेनाऽलौकिकज्ञानेन बालेयं जानात्येव कन्यासिंहयोर्विभिन्नस्थानमिति तेन निश्चितम् । कारागारावस्थायामेवाऽनेन 'मत्प्राणपरित्राणार्थं मे प्राणप्रियैतद्विषयकं ज्ञानं सम्प्राप्य रङ्गभूमौ पश्यतामपि राजादिजनानां मां तेषामगम्येन मार्गेण बोधयिष्यतीति निर्धारितमेवाऽऽसीत् । तस्य जीवनाशा केवलं तदालम्ब्यैव । अन्याज्ञातदृष्ट्याकूतेन स तां कुत्रेत्यपृच्छत् । साऽपि ज्ञातप्रश्ना तत्क्षणमेव दक्षिणकरमीषदुन्नम्य दक्षिणस्यां दिशि तदन्यातर्कितमेव संकेतं दत्तवती । स च निःशङ्कस्सन् तत्क्षणमेव परावृत्य दक्षिणकपाटमेवोद्घाटयत् ।

द्वारात्तस्माद्व्याघ्रो युवतिर्वा समागतेति तु सुधीभिस्स्वयं विचारणीयम् । विचारश्च सनातनधर्ममनुसृत्य नैव कर्तव्यः किन्तु तामर्धसभ्यामीर्ष्याद्वेषनिराशाभिभूतां राजकन्यामनुस्मृत्यैवेत्यलम् ।

---

## त्वय्येव तर्कग्रहः ।

आर्ये ! भावमयि ! स्वभावमहिते ! सौन्दर्यसारोद्भवे !
प्रत्यक्षं त्वमये ! पदार्थघटनानैपुण्यमानान्विता ।
त्वामालोक्य न तर्क्यतां कथमहो ! त्वय्येव तर्कग्रहः
सद्रव्यां सगुणां सुकर्मनिपुणां शेषविंशेषैर्युताम् ॥

झालरापत्तनवास्तव्यराजगुरुनवरत्न पं० श्रीगिरिधरशर्म्मणः ।

---

## विज्जका ।

ले०—पं० बटुकनाथशास्त्रिखिस्तेसाहित्यशास्त्रिणः, काशी ।

सहृदयाः !

प्रतिभा नहि लिङ्गविशेषमपेक्षते, "गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः" इति कविसार्वभौमप्रदर्शितपथेनेह जगति गुणा एव वरिवस्यां लभन्ते, न पुनर्गुणिनः । ते तु गुणविशिष्टत्वादेव सम्मानभाजनम् । इत्थञ्चात्र भारते वर्षे ते ते महाकवयः समभूवन् । तत्र प्रायः पुरुषा एव कवयोऽधिकमासन्निति सुप्रथितमेव । किन्तु प्राचीनसमये नार्योऽपि कवीभवन्तिस्मेत्यत्राह तत्रभवान् कविमौलिशेखरो राजशेखरः— "पुरुषवत् योषितोऽपि कवीभवेयुः । संस्कारो ह्यात्मनि समवैति, न स्त्रैणं पौरुषं वा विभागमपेक्षते । श्रूयन्ते दृश्यन्ते च राजपुत्र्यो महामात्यदुहितरो गणिकाः कौतुकिभार्याश्च शास्त्रप्रहितबुद्धयः कवयश्च" इति ( काव्यमीमांसा अ० १० ) । एतेन प्राचीनसमयेऽपि स्त्रियोऽपि कवीभवन्ति स्मेति सिद्धम् । राजशेखरस्य पत्नी अवन्तिसुन्दर्याख्याऽऽसीत् । काव्यमीमांसायास्तेषु तेषु प्रकरणेषु "इत्यवन्तिसुन्दरी" इति तन्मतं सादरमुद्धृतं कविवरेण तेनैव । अलमप्रस्तुतेन ! अद्य वयं तास्वेव प्राचीनस्त्रीकविषु सुप्रसिद्धाया विज्जकाया विषये लेखिनीं व्यापारयामः ।

संस्कृतसाहित्ये सुप्रसिद्धेयं विज्जका । स्त्रीत्वेऽपि रसभावकरम्बितरचनाचातुर्येण भृशं मनोहारिणी जागर्त्यस्याः काव्यसरणिः । इदमेव तावद् दुःखमत्र समनुभूयते यदेवंविधाया विदुष्याः कोऽपि ग्रन्थरूपो निबन्धो नास्तीति । केवलमितस्ततो ग्रन्थान्तरेषु प्रसङ्गवशादुद्धृतैः स्फुटश्लोकैरेव तस्या विदुष्या विषये यथाकथंचिल्लिख्यत ऐतिह्यरसिकैः । अस्या नाम क्वचित् "विज्जका" इति कचित् "विज्जाका" इति क्वचिच्च "विद्या" इति च लोचनगोचरीभवति । "विज्जका"शब्दश्च "विद्या"शब्दस्यापभ्रष्टं रूपमित्यनुमीयते । शार्ङ्गधरपद्धतौ सुप्रसिद्धमिदं पद्यम्—

> नीलोत्पलदलश्यामां विज्जकां मामजानता ।
> वृथैव दण्डिना प्रोक्ता "सर्वशुक्ला सरस्वती" ॥ इति ।

इत्येवं दण्डिन उपर्याक्षेपेण तदनन्तरभावित्वं सिद्धमेव विज्जकायाः । दण्डिनः समयश्च सप्तमशताब्द्या उत्तरभाग इति सुप्रसिद्धमेव । ततः

पश्चात्कियत्कालानन्तरं विज्जकाया आविर्भाव इति न निश्चयेन वक्तुं शक्यते । अस्याः कतिपयश्लोकास्तैस्तैरालङ्कारिकधूर्धरैः स्वग्रन्थेषु समुल्लिखिताः । तथाहि "दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि" इति पद्यमेतन्मम्मटाचार्यपादैः "शब्दव्यापारविचारे", धनिकेन "दशरूपावलोके", मुकुलभट्टेन "अभिधावृत्तिमातृकायां" च समुट्टङ्कितम् । "धन्याऽसि या कथयसि प्रियसङ्गमेऽपि" इति पद्यमिदं मम्मटाचार्यवर्यैरेव "शब्दव्यापारविचारे" "काव्यप्रकाशे" चोल्लिखितं वर्तते । तेन च मुकुलभट्टदण्डिनोर्मध्यकाल एव विज्जकायाः समयो निश्चीयते । ७१०,८५० ख्रीस्ताब्दयोर्मध्यकाल एव कालो विज्जकायाः । अलमधिकेनेतिहासलवणसागरावगाहनेन । इदानीं विज्जकायाः पद्यरत्नान्युदाह्रियन्ते । व्यङ्ग्यार्थविषये पश्यताभिप्रायं विदुष्याः—

कवेरभिप्रायमशब्दगोचरं स्फुरन्तमार्द्रेषु पदेषु केवलम् ।
वदद्भिरङ्गैः कृतरोमविक्रियैर्जनस्य तूष्णींभवतोऽयमञ्जलिः ॥ इति ।

अत्र पद्ये व्यङ्ग्यार्थमहिमा मर्मस्पृशा सरण्या कथमुपनिबद्ध इति सहृदया एव प्रमाणम् । विशेषोक्त्यलङ्कारस्योदाहरणमिदं दर्शनीयम्—

कोपः स्फीततरः, स्थितानि परितः पत्राणि, दुर्गं जलं
मैत्रं मण्डलमुज्ज्वलं, चिरमधो नीतास्तथा कण्टकाः ।
इत्याकृष्टशिलीमुखेन रचनां कृत्वा तदप्यद्भुतं
यत्पद्मेन जिगीषुणाऽपि न जितं मुग्धे ! त्वदीयं मुखम् ॥ इति ।

अत्र कोपादिपदेषु श्लेषभित्तिकाभेदाध्यवसायेन परिपुष्टा विशेषोक्तिश्चमत्करोति चेतांसि रसिकानाम् ।

विलासमसृणोल्लसन्मुसललोलदोःकन्दली-
परस्परपरिस्खलद्वलयनिःस्वनोद्बन्धुराः ।
लसन्ति कलहुंकृतिप्रसभकम्पितोरःस्थल-
त्रुटद्गमकसंकुलाः कलमकण्डिनीगीतयः ॥ वि ।

अत्र स्वभावोक्तिः कीदृशी चार्वीति प्रत्यक्षमिदंपश्या एव वदन्तु । एवमादीन्यन्यान्यपि कतिचिदुदाहरणानि सन्ति, लेखविस्तारभयान्नेह प्रदर्श्यन्ते । किन्त्वेतावतेदमेव सिध्यति यद् विज्जकायाः काव्यं ध्वनिकाव्येष्वेव परिगणनीयमिति । अयमेव संक्षिप्तः परिचयो विज्जकायाः ।

---

# भारतगौरवम् ।

निबन्धकाः—पं० सतीन्द्रचन्द्र भट्टाचार्याः ।

( अध्यापक. राजकीय संस्कृत महाविद्यालय, गवालियर )

——:※:——

मायातमोहरमनःकमलप्रकाशी
विज्ञानभामिरिह "नास्तिज"रुग्विनाशी ।
सेव्योऽखिलैर्नभसि काशितसर्वतर्कः
राजत्वयं प्रखर—"भारतगौरवार्कः" ॥

भारतगौरवभरचेतसः सुचेतसः! भारतभावभावुका भागवताः! रसरीतिगुणालङ्कारादिसमलंकृतनिर्म्मलस्वान्ताः ! भारतभूभूतभूतभृतो भव्याः !

निबन्धसम्बन्धसंवादादधस्तादेव भारतगौरवरविकरनिकरविकिरण-प्रखरतरव्यस्तसमस्तवस्तुविचारावसरे महामहिम्नो महिम्नः समाम्नाये भृशमनुस्मर्यते कुसुमदशनवक्त्रान्निर्गतः श्लोक एकः—

"असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे
सुरवरतरुशाखा लेखनी, पत्रमुर्वी ।
यदि लिखति गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश ! पारं न याति ॥ इति ।

स्मृत्वा चैवमनारतमानतमस्तको व्यस्तसमस्तकरणको विलापप्रलाप-बहुलमालपन् भारतगौरवमवलम्बमानः किञ्चनेति किं न कम्पते मन्दत-मोऽयं धृतमायकायः ? विदांकुर्वन्तु तावत्तत्रभवन्तो भवन्तःभारत—किन्नरहरिकुरुहिरण्मयरम्यकभद्राश्वकेतुमालेलावृतनामधेयानि नववर्षाणीति ॥ तत्र—

"उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥
नवयोजनसाहस्रो विस्तारोऽस्य महामुने !
कर्म्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम् ॥" इति ।

मुनिगणनिर्दिष्टसीमभारतवर्षमिदानीन्तनदेशसीमनिर्णायकैरनेकशो ह्रस्वीभूतमिति पुराणेतिहासादिविदां नाविदितम्। स्यादेतत्! "तुष्यतु दुर्जन" इति न्यायेन वर्त्तमानमानचित्रमानेनापि भारतगौरवं सर्वतोऽप्यतिरिच्यते। सकलप्रदेशशिरोमणिर्मणिखनिः कस्यामीदृशो देशः परमरमणीयो ब्रह्मणः सृष्टो? षण्णां समवायः पर्यायेण प्रतिवर्षं भारतवर्ष एवर्त्तूनाम्। न स दृश्यते प्रदेशो यस्तुल्यते नामामुना कलालेशलवेनापि विपर्यासप्रकृतिकेऽपि लोके। जगत्यामस्यां कुत्रचिन्नरा गौराः, क्वचन वा कृष्णकायाः, क्वचिद्वा स्थूलनासाः, पृथुपदाः, कुत्र वा कपिशकेशाः, पिङ्गलाक्षाः, क्षुद्रचक्षुषः, क्वचिद् ह्रस्वाः क्वचिद्दीर्घाः, किन्तु सकलाकारा नराः भारतवर्ष एव सुकराः। प्रायेण भारतादन्यो देशः सदैव केवलैकर्त्तुप्रबलः किन्तु सदैवैकर्त्तुप्रधानः पर्यायेण सकलर्त्तुप्रधानश्च देशो भारतवर्ष एव।

भारतवर्षीयं प्राकृतमुररीकृत्य दृश्यं कवीनामवनीतले नानास्थानजुषां कथञ्चिदञ्चितचञ्चद्भालस्थलानां स्वल्पानल्पकल्पनाप्रभवकवित्वप्रसरः। प्रकाण्डब्रह्माण्डभाण्डोदरवर्त्तिपरमवस्तुविचयव्यस्तानां न खल्वलभ्यमिह किञ्चन विद्यते भारते वर्षे। प्रत्युत प्रधानविविधधनानां खनिरसौ भारतमही कल्पद्रुमायमाणा, द्रुहिणद्रविणनिकेतनीभूता, वृन्दारकवृन्दसुवन्द्यपदारविन्दपरागधूसरा, क्वचन वा फुल्लदनेकानोकहनिवहमन्दीभूतपुरन्दरपरिवन्द्यसुन्दरनन्दनमन्दारसन्दोहा मन्दमारुतस्पन्दसन्दोलितावन्ध्या, मन्दारगन्धसुगन्धिकुसुमगन्धसुगन्धगन्धवाहप्रवाहमोदिता, गुरुगुञ्जन्मकरन्दगन्धसन्धानामन्दामन्दनन्दद्द्विरेफा, वृन्दिष्ठवन्दितामन्दस्पन्दमन्दाकिनीसुन्दरवसुन्धरा, गद्गदनदन्नदनद्युपनदनादविनादिता, विशालशैलशृङ्गभङ्गीभङ्गिप्रोत्तुङ्गरिङ्गत्तरङ्गसङ्गतभङ्गसंघर्षसमुत्थसङ्गीतभङ्गीसुरुचिरा, प्रशस्यशस्यश्लक्ष्णकोमला श्यामला।

क्वचोपहसितमुकुरमेचकमरीचिकायां स्फुरति स्फुरदुरुचञ्चलवालुकाकुलसंकुलधरातलम्। क्वचन वा केवलजलजालनिमज्जज्जगतीतलम्। क्वचिदपि गिरिगुरुसुन्दरमन्दिरधरं धराधरनिकरभरं धरणीस्थलम्। कुत्र वा पूततीर्थसार्थैः पूतीकृता लोकाः। भावुकभक्तसाधकसंघानां भागवतभावभावकप्रदेशः, तान्त्रिकयान्त्रिकालौकिकक्रियाकलापैः प्रत्य-

क्षीकृतभागवतशक्तिविकासः। घण्टाशंखडमरुनादविनादितो यज्ञीयधूमस्तोमधूमायितो देवस्तवरवपरिपूरिताम्बरो देशः।

घोरतरप्रखरसुरासुरनरवानरकिन्नररजनीचरनिकरसमरविसरप्रसरे, घनघर्घरझणझणायितगुमगुमायितभैरवरवपरिपूरितपुष्करसमीरगुरुगिरिकन्दरे, हास्तिकहायिकपादातिकरथ्याश्रयिबलिबलसंकुलशोणितपङ्किलरौद्ररससमुद्रेकविलयैकचत्वरे शरशरासनचर्म्मवर्म्मगजरविशिखरिष्टितोमरकरालकरवालसुधारतरतरवालकार्ष्णायससंघर्षणसमुद्भूतहसितसहसौदामिनीदामसुदिरविस्फूर्जथुसमुद्योतितज्योतिस्ततिविस्तारभरे, भारते संप्रहारे, सति दृष्टे, श्रुते वा नानागमनिगमपरिकीर्त्तिते, सल्लिङ्गसङ्गादनुमिते वा मुमूर्षोरपि न कस्य धमनावनीतले भूरि समाविर्भवति निन्दिताचिरप्रभाप्रवाहो रक्तवाहः ?

क एवमन्यत्र भारतात् नयपूर्णसमरव्यवहारः। वीरवीराङ्गनासङ्गिनी रौद्ररसप्रसविनी वीरजननी रमणीमणिधारिणी मेदिनी ?

क्व नु खलु रणनय एवमाश्रूयते यत्—निरस्त्रैः शस्त्रिणां पादातिकैर्वा हास्तिकहायिकरथारोहिणां जात्वपि न संप्रहारव्यवहारः। श्रान्ते वा वीरवरे, प्रदर्शितपृष्ठे वा वीरवरिष्ठे समरनिवृत्तिः ? समुपस्थिते वा स्वीकृतसमयान्तरे पुनर्यथायथमवितथसमाघातनीतिं समनुरुध्य वा युद्धसञ्चारः ? वधेन च विना पराजितपरबन्धनं वा समुपेक्ष्य सावज्ञं वैरिणो रणनिर्मोक्षः। मल्लाय च समर्थो मल्लः क्व भारतीयादन्यो युधि कदापि श्रुतपूर्वः।

ये च खल्वर्वाचीनाः प्राचीननयपरिपन्थिनो विवेकविनयविहीना विकारिणो विस्मृत्य भारतगौरवमुररीकुर्वन्ति प्रतीच्यवैपश्चित्त्यमतिसमुन्नतम्, समुद्घोषयन्ति च "पुरा नासीदेव नववैज्ञानिकसमाविष्कृतेदानीन्तनविमानयानकामानतोपगोलाद्यभिधानानामाविष्कारो व्यवहारप्रचारो वेति"। न खलु स तेषां दोषः, दोषस्तु नो दुर्भागधेयस्य, स्वकीयशिक्षावैमुख्यात् प्रतीच्यशिक्षादीक्षाप्रभावाच्च स्वकीयसर्वस्वसंरक्षणे नितान्तमनास्थाया वेत्यन्यदेतत्।

प्रत्नतत्त्वविदो मनीषिणः! भवतां कस्यैतदविदितं यद् रामरावण-

रणक्षणे श्रीरामपक्षनिक्षिप्तशस्त्रादिषु कामानादीनामपि नामान्तरेण नामसन्निवेशो रामायणादावुपलभ्यते यथा—

"परिगृह्य शतघ्नीश्च सचक्राः सगुडोपलाः ।
चिक्षिपुर्भुजवेगेन लङ्कामध्ये महास्वनाः ॥"

शतघ्नीति तोपापरनामधेयस्य ? गुडकेति च गोलाभिधानस्य पारिभाषिकी विशेषसंज्ञा नव्यानामिदानीन्तनी ।

"उर्वाग्निं प्रोथितं कृत्वा शतघ्नीर्गुडकैर्युतम्" इत्यादि कृष्णशल्ययुद्धवर्णनप्रतीकेन नीतिचिन्तामणिभणितेन, उर्वनामकमहर्षिसमाविष्कृतोर्वाग्न्यभिधानस्यैवाधुनातनमभिधानं 'वारुद' इति न केषाञ्चन पुराणतत्त्वविदामविदितम् ! न केन श्रुतपूर्वमिन्द्रजितो व्योमयानारोहिणो वा युद्धवृत्तम् । वस्तुतो ह्यगणितान्यपराण्यपि कति कति समासन् अत्यद्भुतानि प्रधानप्रधनयन्त्राणि, तान्येकैकशः कालकवलतश्चिरविलीनानि न खलु पुनराविर्भविष्यन्तीति नः परमो मनःखेदः ।

अलमधिकनिदर्शनप्रदर्शनेन ! यदभूदभूतपूर्वं महाक्षेत्रकुरुक्षेत्रे, कलेरादौ प्रधानप्रधननैपुण्यवितानं कुरुपाण्डवीयं वैश्वानरवरुणरौद्रबाणविक्षेपशरनिक्षेपप्रभृतिकं "न भूतो न भविष्यति" इति जनश्रुतिप्रत्यक्षसाक्षिकं, तदपि किं समपेक्षते वक्तारम् ? अष्टादशाक्षौहिणीसमावेशः कुत्रापि श्रुतपूर्वः ?

"अयुतं च नागास्त्रिगुणीरथानां, लक्षैकयोधा दशलक्षवाजिनाम् ।
पदातिसंख्या षट्त्रिंशकोटयः, अक्षौहिणीं तां मुनयो वदन्ति ॥" इति

किञ्च ततोऽपि चिरतरपूर्वकाले रघुकुलकरीरयोर्लवस्य च चन्द्रकेतोरतिप्रखरसमरसमानविज्ञानं क च भारतादन्यत्र केनापि स्वप्नेऽपि कदाऽपि समाविष्कृतमाविष्करणीयं वा शक्यते नाम सम्भावयितुमपि ? लक्ष्मणात्मजनिक्षिप्ते चाग्नेयास्त्रे तदीयप्रलयकालकरालप्रज्वलज्ज्वालाकुलविलोलकोलाहलसंकुलिते किल निखिले लोके सहसा वारुणबाणमहिम्ना समाविर्भूतनिपतन्नीरसम्भारभरनीलनीरदप्रसादाज्जगतीतलं शीतलमलमकार्षीद्रामपुत्रः कनीयान् ।

किमहो वैचित्र्यम् !! कदाचिदाग्नेयबाणदग्धं सन्दिग्धसमवस्थानमिव धरातलम् !! क्वचन वा वारुणबाणमहिम्ना छिन्नमग्नमिव महीतलम् !! गुरुगुञ्जत्प्रभञ्जनपुञ्जसंचालितमकस्मात् कस्मादन्तर्हितमहितस्तनितनूत्न-स्तनयित्नुकदम्बकम् !! निक्षिप्तबाणस्य पुनराकर्षणम्, शब्दभेदिबाण-विज्ञानम्, लक्ष्यमात्रविभेदकं न न्यूनं नाधिकं वा बाणानुसन्धानं कस्य खलु भारतीयादितरस्य स्वप्नेऽपि गोचरीभूतमनल्पकल्पनासम्भूतमपि वा संभाव्येत ?

अयि मम प्रियतमश्रोतारो महाभागाः ! भारतगौरवहृदयाः ! प्रत्न-तत्त्वविदः पुराणेतिहासकोषज्यौतिषचक्षुषो मनस्विनः !! भारतीयज्योति-र्विद्यायाः कणमात्रपर्यालोचनेऽपि नोपमा क्वाप्यस्य कणांशेऽप्युपलभ्यते । ज्योतिर्विदामग्रेसरा ज्योतिषगवेषणायां विलीनाः पराशरार्यभट्टमयादयः सोमसिद्धान्तब्रह्मसिद्धान्तादिप्रणेतारश्च भूतत्त्वभूगोलखगोलग्रहोपग्रह-नक्षत्रवृत्तराशिसञ्चरणवर्षाशनिनिपातनरौद्रशिशिरसम्पातनातिवृष्ट्यनावृ-ष्टिसम्भावनादिकम्, जन्मकालीनकुण्डलीविचारप्रचारप्रभावाच्च सौभाग्य-दुर्भाग्यपरमायुःपुत्रदारादिसुखदुःखादिनिरूपणम्, मुहूर्तविशेषप्रभावात् गमनागमनजन्यफलाफलपर्यालोचनम् अन्यच्चासंख्यातमत्यावश्यकम-भिधाय सकलदेशपरमगुरवो जगत्यामभूतपूर्वाविष्कारप्रकारैर्भारतगौरव-मातेनुरिति कस्याऽक्षरं परिचिन्वतो ह्यविदितम् ?

( सावशेषम् )

—०—

# रामायणमहाभारतप्रतीच्यसमीक्षासारः ।

ले०—साहित्यशास्त्रिसाहित्यरत्न एम्० ए० गाडगिळोपाह्व-
पं० राजारामशास्त्रिणः, काशी ।

—:o:—

रामायणमहाभारते लौकिकसंस्कृतनिबद्धे आदिमे काव्ये इति निश्चप्रचम् । अत एव रामायणमाद्यकाव्यं तत्कर्ता वाल्मीकिश्चाऽऽदिकविरिति जनैर्व्यपदिश्यते । एवमेव महाभारतं 'पञ्चमो वेद' इति लोकेषु प्रसिद्धम् । एतच्च ग्रन्थद्वयमभिलक्ष्य कोविदाः इतिहासपदमुपयुञ्जते । इतिहासादितरत्पुराणादिकमपि प्रख्यातमेव । अयमेव प्राधान्येनेतिहासपुराणयोर्भेदो यत्तयोराद्ये उपाख्यानभूयिष्ठे सत्यप्येकैव मुख्या कथाऽऽदितोऽवसानपर्यन्तं प्रवर्तते; द्वितीये पुनर्वक्तृवर्जं सर्वाण्येवाऽऽख्यानानि परस्परं भिन्नानीति । अनयोरितिहासयोरुपरि पाश्चात्त्यकोविदैः कीदृशी दृष्टिर्निपातितेति द्रष्टुकामैः सुधीभिरवलोकनीयोऽयं लेखः ।

रामायणमहाभारतयोर्निर्माणाऽऽरम्भो वेदरचनानन्तरं समजनीति कथनमयुक्तं स्यात् । यावच्च वेदानां केचिदन्तिमभागा निर्माणाऽवस्थायामेवाऽऽसन् तावदेवेतिहासयोरपि प्रारम्भः सञ्जात इति प्रमाणप्रतिपन्नमेतत् । तत्र न तावन्महावेदिं विभजन्ती पृष्ठ्येव काचन मध्यरेखा वेदनिर्माणसमाप्तीतिहासनिर्माणाऽऽरम्भकालयोर्मध्ये कल्पयितुं शक्या । यथा ऋक्संहितायां ब्राह्मणभागेषु च समुपलभ्यमाना वीरनृपतिचरित्रवर्णनपराः काश्चिदैतिहासिक्यः कथा लोकेषु प्रचलिताभ्यः कथाभ्य एव सङ्गृहीताः स्युस्तथैव लोकेषु प्रचलितानि बन्दिभिश्च सर्वत्र गीतानि वीरोपाख्यानानि महाभारतरामायणादिष्वपि संगृह्य निवेशितानीत्याधुनिकानां पाश्चात्त्यविपश्चितां मतम् ।

## महाभारतम्

महाभारतं "कार्ष्णो वेदः", "पञ्चमो वेद"इति वा लोके प्रसिद्धम् । एतच्चैकेनैव कविना नोपनिबद्धं स्यादिति पाश्चात्त्या मन्यन्ते । सहरिवंशे तस्मिंश्च लक्षसंख्याकश्लोकानां समुपलभ्यमानतया महाभारतं शतसाहस्री संहितेति व्यपदिश्यते । महाभारतेऽष्टादश पर्वाणि ।

तत्र चाष्टमषोडशसप्तदशाऽष्टादशपर्ववर्जं प्रतिपर्वोपपर्वाण्यपि सन्ति। दीर्घतमं पर्व द्वादशमनुमानतश्चतुर्दशसहस्र(१४०००) श्लोकात्मकम्, लघुतमञ्च पर्व सप्तदशं द्वादशोत्तरशतत्रय(३१२) श्लोकात्मकम्। ऊनविंशं पर्व खिल इति प्रसिद्धं हरिवंशाख्यं महाभारतपरिशिष्टरूपम्। हरिवंशः षोडशसहस्र(१६०००) श्लोकात्मको ग्रन्थः; इह हरिवंश-विष्णु-भविष्याऽभिधेयानि त्रीणि पर्वाणि। महाभारतीयः कृष्णः प्राधान्येन राजनीतिज्ञः किन्तु हरिवंशीयः कृष्णो विष्णोरवतार इत्यवधेयम्।

इदानीमुपलभ्यमानस्य समग्रस्य लक्षसंख्याकस्य ग्रन्थस्य पञ्चमो भागो विंशतिसहस्र( २०,००० )श्लोकात्मको महाभारतस्य प्रधान-कथांशः। एतदतिरिक्तो भागः सुरराजर्षिकथा, विश्वोत्पत्ति,देववंश-वर्णन, दर्शननीतिधर्मयुद्धकर्तव्याऽऽदिविचारभूयिष्ठ उपदेशबहुलश्च। महाभारते क्वचन मध्ये श्रीमद्भगवद्गीताप्रभृतयः सम्पूर्णा ग्रन्था निवेशिताः। एतेन महाभारतं नेतिहासमात्रं किन्तु पुमर्थचतुष्टयप्रति-पादकं स्मृतिशास्त्रमेवेति स्पष्टम्। महाभारतीयमहापर्वणामारम्भे-

"नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्॥"

इति विष्णुस्तुतिरस्य कार्ष्णवेदाऽऽख्या चैतस्य वैष्णवधर्मशास्त्रत्वं गमयतः।

महाभारतस्याष्टशतोत्तराष्टसहस्र( ८८०० )श्लोकमात्रात्मकत्वम्, उपकथासंयोजनात्प्राक् चतुर्विंशतिसहस्र( २४००० )श्लोकात्मकत्वं, त्रिवारं परिष्कृतत्वञ्चाऽऽदिपर्वणि स्पष्टतया निर्दिष्टम्। इदानीमुपलब्धो ग्रन्थस्त्रिवारं परिवर्धित इत्ययं सिद्धान्तो बहुभिर्बाह्याऽऽभ्यन्तरैः प्रमाणै-रुपोद्बल्यते। सततं प्रक्षिप्यमाणैः श्लोकैर्ग्रन्थोऽयमेतावतीमियत्तां प्रापित-स्तथा बन्दिभिः स्तुतानि भरतानां युद्धचरितानि महाभारतस्य प्रधानांश आसीत्तत्रोपदेशपरो भाग उपकथाभागश्चानन्तरं संयोजित इत्यर्वा-चीनानां मतम्।

यजुर्वेदीयकुरुपञ्चालवृत्तान्तः काठकीयधृतराष्ट्रवैचित्रवीर्योदन्तश्च महाभारतस्यैतिहासिक आधार इत्यधुनातनैर्विद्वद्भिः प्रतिपाद्यते। इत्थं ख्रिस्तीयशकप्रारम्भात्पूर्वं दशमे ( केषांचिन्मते पञ्चदशे वा ) शतके

भारतयुद्धं बभूवेति ैरनुमीयते। तद्वर्णनपराणि परम्पराऽऽगतानि गीतानि सर्वत्र जनैर्गीयमानानि कस्मिंश्चित्काले संगृह्य ग्रन्थरूपेण प्रकाशितानीति। तदा ग्रन्थः ८८०० श्लोकमात्रात्मक आसीत्स कालश्च ख्रिस्तीयशकप्रारम्भात्पूर्वं पञ्चमी शताब्दी स्यादिति तैः कथ्यते। अत्र चाऽऽश्वलायनगृह्यसूत्रीयो "भारत-महाभारत" इति नामद्वयनिर्देशो महाभारतस्याऽऽश्वलायनगृह्यसूत्रात्प्राक्स्थितेः परिपोषकत्वेनोपन्यस्यते। पालीसाहित्यगतं ब्रह्मणः सर्वदेवश्रेष्ठत्वमपरं प्रमाणम्। महाभारतस्यास्मिन् भागेऽपि ब्रह्मणः सर्वदेवश्रेष्ठत्वाऽङ्गीकारादयं भागः पालीसाहित्यात्पूर्वं निर्मित इति सुवचम्।

ख्रिस्तात् प्राक्कालिके तृतीयशतके ग्रन्थः २४०० श्लोकसंख्यामवापेति तात्कालिकस्य मेगस्थनीज (Megasthenes) नाम्नो यवनस्य वर्णनादवगम्यते। तद्वर्णनानुसारतो ब्रह्मा विष्णुः शिवश्चेत्येषा त्रयी जनानां पूजाऽऽस्पदमभूदित्यत एवत्रयीपूजाविधायको महाभारतभाग ऐतत्कालिकः स्यादिति स्थितमेव। महाभारते निर्दिष्टानि यवनशकपल्हवादिनामान्यप्यमुमेव कालं सूचयन्ति।

अनन्तरञ्च केनचित्कविना (व्यासेन) अपरानपि भागान् ग्रन्थे संयोज्य प्रकृताऽऽकारो ग्रन्थः पुरस्कृतः स्यादेवमेव च 'व्यास' इत्याख्यायाः सार्थक्यमिति प्रतीच्यपण्डितानामाशयः। महाभारतीयं प्रमाणमुद्धरतस्तात्कालिकादेकाद्दानपत्रादयमर्थोऽवसीयते यदयं कालः ख्रिस्तीयपञ्चमशताब्द्याः पूर्व एव स्यादिति।

किन्तु डलमन् (Dahlmann) नाम्नः कृतिनो नैतस्मिन् मते आस्थाऽस्ति। स तु महाभारतमादित एव लक्षसंख्यात्मकमुपदेशपरञ्च मन्यते।

महाभारतस्य त्रयष्टीकाकारा ज्ञायन्ते। सर्वज्ञनारायणः सर्वाऽऽद्यष्टीकाकृत् यश्चतुर्दशशतकोत्तरभागे बभूव। अर्जुनमिश्रोऽप्यपरः। नीलकण्ठश्चान्यो यः षोडशशतके बभूवेत्यवधार्यते।

महाभारते प्रसिद्धान्युपाख्यानानि— कालिदासीयशाकुन्तलनाटकाऽऽधारभूतं शकुन्तलोपाख्यानं सर्वप्रथमं निर्देशमर्हति। महाभारते रामायणोपाख्यानमप्युपलभ्यते येन रामायणस्य महाभारतपूर्ववर्तित्व-

अवसीयते । रामायणे, पद्मपुराणे, स्कन्दपुराणे चात्रस्यशृष्यश्रृङ्गोपाख्यानमुपलभ्यते । उशीनरोपाख्यानं पालीसाहित्येऽपि ख्यातमेव । आख्यानान्तराणि द्रौपदीसावित्रीनलोपाख्यानादीन्यवगन्तव्यानि ।

महाभारतमत्वे समुपलभ्यमानानां बहूनां काव्यानामाधारग्रन्थोऽभूदिति तत्तत्काव्याऽवलोकनपुरःसरं निश्चीयते । कथमिव विफलीक्रियेत भगवद्व्यासोक्तिः—

पर्जन्य इव भूतानामक्षयो भारतद्रुमः ।
सर्वेषां कविमुख्यानामुपजीव्यो भविष्यति ॥ इति ।

## रामायणम्

इक्याकोपि (Jacobi) नाम्नः पाश्चात्यविपश्चितो मते रामायणमादावयोध्याकाण्डादारभ्य लङ्काकाण्डसमाप्तिपर्यन्तं पञ्चकाण्डात्मकमेवाऽऽसीत्तत्र चानन्तरं बालोत्तरकाण्डे संयोजिते तथा ह्युत्तरकाण्डं बहुकालोत्तरं संयोजितमित्यत्र लङ्काकाण्डस्यान्तिमपद्यान्येव प्रमाणम् । भूयसां बालकाण्डवर्तिवचनानाञ्च काण्डान्तरवर्तिभिर्वचनैः सह विरोधस्य दृश्यमानत्वाद्बालकाण्डमपि दीर्घकालानन्तरं संयोजितं स्यादिति स मन्यते । अन्यच्च रामायणस्य पञ्चकाण्डात्मकत्वे प्रमाणं स एवोपन्यस्यति— बालकाण्डप्रथमतृतीयसर्गवर्णितयोः रामायणसारयोरेकस्मिन् ( तृतीयसर्गीये ) एव रामजन्मकथोत्तरकाण्डकथा च वर्णिताऽऽस्ते । अपरस्मिंस्तु ( प्रथमसर्गीये ) एतद्वर्जं पञ्चकाण्डात्मिकया एव कथायाः संक्षेपेण वर्णनमुपलभ्यते । एतेन रामायणं कस्मिंश्चित्काले पञ्चकाण्डात्मकमेवाऽऽसीदित्युपर्युक्तः कृती मनुते । यच्चात्र तत्त्वं तद्रामायणमालोचयद्भिः प्रेक्षावद्भिः स्वयमेव विचारणीयम् ।

रामायणनिर्माणकालः—( १ ) महाभारते रामायणकथाया निर्दिष्टतया, महाभारतीयस्य कस्यापि पुरुषविशेषस्य च रामायणेऽनिर्दिष्टतया महाभारतीयप्रधानांशनिर्माणात्पूर्वमेव रामायणं निर्मितमासीदिति वक्तुं शक्यम् । ( २ ) महाभारतीयसप्तम(द्रोण)पर्वणि लङ्काकाण्डस्थं पद्यमेकं वाल्मीकिनामनिर्देशपूर्वकमुद्धृतम् । इत्थमपि रामायणं महाभारतीयप्रधानांशात्प्राङ्निर्मितमासीदेव । ( ३ ) महाभारतीयतृतीय(वन)पर्वणि रामोपा-

ख्यानमेकमवाप्यते यद्वाल्मीकीयैः कतिपयैः पद्यैः सह साम्यभजनाद्रामायणाश्रयमिति ज्ञायते । (४) पालीभाषानिर्मिते दशरथजातके विद्यमानायां रामकथायां लङ्काकाण्डीयाष्टाविंशत्युत्तरशत १२८ तमसर्गस्थमेकं पद्यं दृश्यते । एवमपि रामायणं बुद्धात् प्राक्कालिकमिति निर्विवादमेतत् ।

वेवेर (Weber) विपश्चितो मते—सीताहरणादिकं होमर् (Homer) नाम्नः कवेरिलियड् (Iliad) काव्येन संवदतीत्यतो रामायणकथायां यावनी (Greek) च्छाया स्पष्टमुपलक्ष्यते । किन्तु नैतत्कथनमुपपद्यते । एतादृश्यः कथाः सर्वेष्वेव देशेषूपलभ्यन्त इति न तासु मिथः प्रभावः कल्पनीयः ।

रामायणमार्याणां दक्षिणदिग्विजयस्य लाक्षणिकी कथेति लैसेन् (Lassen) नाम कश्चित् । एतादृशस्याऽऽशयस्य ग्रन्थकृता रामायणे क्वचिदप्यप्रकटीकृतत्वान्नैतदपि प्रमाणप्रतिपन्नम् ।

इज्याकोपी (Jacobi) महोदयस्तु रामायणं वेदवर्णितेन्द्रवृत्रयुद्धाश्रयं मन्यते । तन्मते राम इन्द्रो, मारुतिरिन्द्रसहायका मरुतः, सीता गोस्थानीया, रावणश्च वृत्र इति ।

महाभारत इव रामायणेऽपि बहूनि सुन्दराण्युपाख्यानानि सन्ति । तेषु गङ्गावतरण—विश्वामित्र—श्लोकोत्पत्त्युपाख्यानानि शस्ततमानि । बहुसङ्ख्या ग्रन्था रामायणीं कथामाश्रित्य निर्मिताः । रामायणस्य तन्निर्माणकालमारभ्य केनाऽपि ग्रन्थेनाऽतुलनीयो लोके प्रचार आसीत्परिदृश्यते च । स्पष्टमेवाभिहितं ग्रन्थकृता—

"यावत्स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ॥" इति ।

———

# ग्रीष्मवर्णनम् ।

काशीस्थहिवेट्क्षत्रियहाईस्कूलाध्यापकसाहित्याचार्य-वेतालोपाह्व-
पं० अनन्तरामशास्त्रिणः ।

———:※:———

न ज्येष्ठेऽमरभारती प्रकटिता ग्रीष्मावकाशं गते-
स्युच्चैस्तामनुपालयन्नयमहो ! ग्रीष्मस्तु वर्षास्वपि ।
आयान्त्यां प्रकटं किलात्र लभते मञ्जीमञ्जीलस-
न्मालाऽऽ१लीकवितावलीविलसितः प्राप्तावकाशः श्रियम् ॥

धुन्वन्नेकान्तमन्तःकरणमसुमतां शोषयन् सिन्धुवर्गां
तन्वन्नुत्साहसम्पत्प्रशमनमभितः प्लोषयन् काननानि ।
तान्ति भ्रान्तिं क्रमेणाऽधिधरणि सरितः प्रापयँश्चक्रवाकान्
भीष्मो ग्रीष्मोऽद्य माद्यन् जगदिदमखिलं तापयन् द्योतीति ॥१॥

कार्श्यं ग्रीष्मे रजन्या ज्वरभरनिकराक्रान्तया नूनमाप्तं
गत्यामत्युष्णभासाऽप्यकलि किल तपोत्तापतप्तेन मान्द्यम् ।
अश्रान्तं निःश्वसन्ती क्वचिदपि जनता नैति सन्तापशान्तिं
कालः कालोपमोऽयं दलयति हृदयं, हा निदाघो निदाघः ॥२॥

अम्भो मच्छोष्यमाणं स्पृहयति जनता तापिताङ्गी नितान्तं
मद्रात्यम्भोविहारैरपि कमलवनं प्राव्यमत्प्रीतिपात्रम् ।
इत्थं क्रोधाद्विपक्षन्निव जगदधुनोत्तप्तगात्रोऽतिमात्रं
पश्यन् क्रूराग्निनेत्रैर्दशशतकिरणोऽत्युग्रतेजाश्चकास्ति ॥३॥

लोका नोदश्वसिष्यन्नतिशयभयदे हानिदा२ऽघे निदाघे
मध्ये मध्येऽप्युदारा न किल सुखकराश्चेदवास्यन् समीराः ।
कालेऽस्मिन्नाम्रसम्पत्परिणतफलदे तापभीतेव कूपे
वस्त्रच्छन्नेऽप्युरोजे वटतल उचितं शीवताऽऽप्ताऽवकाशम् ॥४॥

---

१ आली—सखी, सदृशीति यावत् । २ हानिदं कष्टं यस्मायत्र वा तस्मिन् ।

भूयः स्वेदोदबिन्दुव्यतिकरकलितं स्रस्ततां याति गात्रं
नेत्रद्वन्द्वं निमीलां कलयति नितरां हन्त ! मूर्छाप्युपैति ।
ग्लानिं प्राप्तेन तस्थे भृशमिह मनसोत्साहशून्येन, मन्ये
ग्रीष्मः सम्प्रत्यवस्थां जनयति जगतां तां रतान्तक्षणोत्थाम् ॥५॥

ग्रीष्मोत्तप्तोऽतिखिन्नोऽध्वनि चलनवशात्कश्चिदुच्चैःपिपासः
प्राप्तः पानीयशालां सुरुचिमपि च तत्पालिकां तत्र पश्यन् ।
पानार्थी तामुपायात्सरसमथ तया पायितं तत्प्रकामं
पाथः पिप्ये स, चित्रं परमतनुगुणा तत्पिपासा न शान्ता ॥६॥

वालेषु स्पर्शकेलीकृतरतिषु जले रोधसि स्थानमेकं
विश्रान्त्यै कल्पयित्वा निजतरणकलाकौशलं दर्शयत्सु ।
केनापि स्पृष्टगात्रः सपदि सहचरै"रेष चौरो बभूवे"–
त्युक्तः कश्चित्तपर्तावतिनिपुणतया चेष्टते स्प्रष्टुमन्यान् ॥७॥

तोयक्रीडाविशेषप्रणयनविषयप्रत्तचित्तास्तपर्तौ
लोकास्तापार्तिजालाकुलतनुलतिकास्तन्वते वार्विहारम् ।
पाथःपूरे प्लवन्ते कतिचन विततोत्क्षिप्तबाहाः सहेलं
केचित्कूर्दन्ति चोच्चैर्भुजयुगलदृढोन्नद्धजानुद्वयान्ताः ॥८॥

अन्योन्यं सिक्तगात्राः करतलयुगलीसम्पुटोत्पीडिताऽर्णो–
धारासारेण हस्तोल्लुलितजलभरैः केऽपि चारक्तनेत्राः ।
तै'रे नीरे विहारं विदधति, सलिलान्तर्निमग्नास्तलस्थां
मृत्स्नामानीय कृत्याऽभिदधति च परे स्वां तलस्पर्शवत्ताम् ॥९॥

नौकायां केऽपि नीरे विदधति विहृतीः, सायमारामभूमिं
गच्छन्त्यारन्तुमन्ये परिमलविलसन्मल्लिकापाटलाढ्याम् ।
ग्रीष्मे भूगर्भगेहे सुखमिह रसिकैर्नीयते मध्यमह्नो
रम्भोर्वम्भोरुहाक्षीस्तनयुगलपरीरम्भसम्भावनाभिः ॥१०॥

१ तीरसम्बन्धिनि ।

सन्तप्ताऽयोमयीव प्रथयति पृथिवी भूरि दुःस्पर्शभावं
प्रायेणाऽऽपो धृतौष्ण्या जहति निजगतां शीतलस्पर्शतां ताम् ।
सन्तापान्ध्यं समन्तात्क्रियत इव रवेस्तेजसाऽभीक्ष्णमक्ष्णोः
क्लिश्नन्त्यङ्गानि दावानलविकलवनान्निर्गताः किन्तु वाताः ॥११॥

आकाशं तिग्मरश्मेः खरतरकिरणैर्वर्षतीव स्फुलिङ्गान्
कालोऽत्यूष्मैष कालः किमु, दधति दिशस्तापरोक्ष्यं किलोच्चैः ।
आत्मा[2] दाहेन गाढं पुटित इव, मनोऽप्याकुलं नु प्रतप्तं
द्रव्याण्याक्रम्य तिष्ठन् प्रकटयति गुणं चित्रमूष्मा गुणोऽयम् ॥१२॥

नैदाघा द्वादशादित्यास्त एतेऽनन्तकल्पिताः ।
सन्तु सत्कविलोकान्तस्तापनिर्वापणक्षमाः ॥

---

## प्रहेलिका ।

व्याकरणसाहित्याचार्य, साहित्यरत्न-
पं० श्रीहरगोविन्दमिश्रः, काशी ।

——:॥:——

को वैनतेयरथगः ? सुरभोजनं किं ?
किं देवसद्म ? हि शिलोच्चयवाचकः कः ?
नीराण्डजार्थकपरावथ कौ च वर्णौ ?
को वा हली ? समिति योद्धृभिरिष्यते कः ? ॥१॥

प्रश्नाष्टकोत्तरपुराभववर्णवाच्याः
पूज्याङ्घ्रिपद्मयुगला भुवि के ममैमे ?
प्राच्यप्रतीच्यभववाग्वनिताधिनाथाः
के ? येऽधिकाशि किमु भूतल एव मान्याः ॥२॥

प्रहेलिकाया एतस्याः समालोच्याखिलोत्तरम् ।
प्रकाश्यामरभारत्यामनुगृह्णन्तु नो बुधाः ॥३॥

---

२ शरीरम् ।

काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यक्षाणां महामहोपाध्याय-
एम्० ए० पदवीविभूषितानां श्रीगोपीनाथकविराजमहोदयानां

## शुभाशंसा ।

—:※:—

श्रीमद्राजाऽधिराजादधिगतपरमोदारमानोऽसमानो
युक्तो नित्यं नितान्तं मणिगणखचित'स्रग्धरा'ऽम्बाऽङ्घ्रियुग्मे ।
त'न्तुर्याऽद्वैतशान्तं शिव'मुपगतवान् यः स्वयं शम्भुरूपः
श्रीमान्मान्येषु मान्यो जयति जनि-जरा-जित्वरः कोऽपि नाथः ॥१॥

गोविन्देऽमन्दभक्तिः क्षरदमरधुनीस्वच्छपीयूषपूरं
पीत्वा शेते सुखं यः स जयति कविराट् काशिकायां नगर्याम् ।
नानापड्दर्शनाऽऽद्यागमविमलमतिर्विश्वनाथाऽङ्घ्रिपद्मे-
ऽथ, स्वाऽऽत्मानं समर्प्य क्षपितभवभयश्चिन्मुदा संचकास्ति ॥२॥

कल्याणं श्रीपतिर्वः सरसिजनयनो नित्यमेव क्रियाद् यो
विद्यामैश्वर्यमर्थं सुतमपि भवतामुन्नतिं नेष्यति द्राक् ।
राजद्वारे प्रशस्ता प्रसरतु महती कीर्तिरस्त्युज्ज्वला वो
जल्पाकानां मुखानां प्रभवतु वचनस्तम्भने गीस्त्वदीया ॥३॥

जीव्याज्जीयाच्च तावच्छतमिह शरदां श्रीभवान् भाग्यशाली
कामं कामाऽरिपादाऽम्बुजयुगमनिशं चेतसा चिन्तयन् सन् ।
सर्वज्ञः सोऽपि शर्वो भवभवभयभिद् भव्यभस्माऽङ्गरागो
दास्यत्येव प्रसन्नो निजसदयदृशं श्रीमतां मङ्गलाय ॥ ४ ॥

उद्यन्मार्तण्डदीप्तद्युतिरिव भवताद्वः प्रतापोऽप्यखण्डो
दद्याद्वः सर्वसिद्धिं स हि मदनहरो मस्तकन्यस्तगङ्गः ।
यत्पादाऽम्भोजयुग्मं भ्रमति च भवतां मानसान्तर्निविष्टं
होराऽङ्काऽऽवर्तिसूचीयुगलमिव घटीयन्त्रचक्रेऽल,मों,शम् ॥ ५ ॥

पं० केशवदत्तपाण्डेयसाहित्याचार्याः, काशी ।

---

# भ्रातृभगिन्योरालापः ।

ले०—आसाटारवास्तव्या मिश्रोपाह्वा श्रीमती चन्द्रावती देवी "कविताकाननम्"।

——:०:——

भगिन्या भ्राताऽभ्यर्थितः—हे भ्रातः ! एकवारं मद्देशमागत्य भगिन्याः सुखं दुःखं च श्रोतव्यं द्रष्टव्यञ्च ।

भ्राता—वत्से ! तव देशे बहुशः पलाशाऽरण्यान्यो यत्र व्याघ्रा वसन्त्यत आगमनं सोपद्रवम् ।

भगिनी—सौम्य ! अस्त्र-शस्त्र-धारिणो वीरस्य ते व्याघ्राः किं ग्रहीष्यन्ति ?

× × × ×

काले समागच्छन्तं स्वभ्रातरं दृष्ट्वा तद्भगिनी श्वश्रूं पृच्छति—द्वौ जनौ श्यामगौरौ समागच्छन्तौ विलोकयेऽहम्; श्यामो मे पति-र्गौराङ्गो भ्राता ।

फलकोपविष्टां मनस्विनीं श्वश्रूं वधूः पुनराह—अनयोः श्रान्तयोः कृते भोजनं किमुपकल्प्यम् ?

श्वश्रूः—दुर्भगे ! कुसूले निःक्षिप्तानां शीर्ण-जीर्णपूतिगन्धानां कोद्रवाणामोदनं केदार-खण्डे स्वयम्प्ररूढानां मसूराणां शाकं च रन्धय ।

वधूः—मातः ! तादृशे कोद्रवेऽग्निः प्रज्वलयाच्छाके च वज्रं··· ।

वध्वा गोधूम-शष्कुल्यो मुक्ता-समानो व्यासव्रतां ( बासमती ) तण्डुलानामोदनोऽलाबू-शाको मुद्गद्विदलश्चोपसम्पादितानि घृताक्तानि स्वर्णपात्रे परिवेष्य द्वयोरग्रे स्थापितानि। श्यालावुत्तौ भोक्तुमुपविष्टौ ।

अन्तरे रुदन्तं श्यालं पृच्छत्यावुत्तः—किन्ते मात्रा निर्मितं पाथेयं त्वया स्मर्यते ? दयितायाः सूनृता हृदयाह्लादिनी स्निग्धा वाग् वा ?

श्यालः—नैतत् किमपि । किं तु प्राभातिकसूर्यवर्णां हिरण्यवर्णां वा मद्भगिनीं कष्टेनाऽन्नत्येन दग्ध्वाऽङ्गारभूतां कोकिल वर्णां वा···।

भगिनी—श्लाघ्य ! भ्रातः ! मालाकारकुटीं गच्छ, तत्रैव मद्दुःखगाथां श्रोष्यसि ।

× × ×

पूज्य ! कियन्मणं विदल्यते; कियन्मणं पिष्यते; कियद् वा रन्धयित्वोपसम्पद्यते । असंख्यान्यमत्राणि प्रमार्ज्यन्ते बलादिच्छाविरहितयाऽपि मया, श्वश्र्वा । अतिदूरतलसंसर्गिजलात् कूपात् पानीयान्यु-

दृच्यन्ते । सर्वान् प्रभोज्य, प्रपाय्य, शुने मार्जाराय ग्रासं प्रदाय, देवराय ननान्द्रे च कल्यवर्त संस्थाप्यावशिष्टां लघ्वीमन्तिमां रोटिकां भुङ्क्ते । परिधानं हि कच्चरं जीर्णं शीर्णं सर्वैः परित्यक्तं वस्त्रम् ।

भ्राता—हा ! लौहकर्मकारापणे दह्यते मद्भगिनी श्वशुरालये !

भगिनी—स्वान्वयललाम ! न निगदनीयं त्वया स्वदयितासमीपे दुःखमेतत् । न चेत् सा पञ्चेभ्यो गृहेभ्यो वायनं करिष्यति । हे मातृ-नेत्रतारक ! जननीमपि न ब्रूह्येतत् । न चेत् हृदयं विदार्य मृता स्यात् । न वा पितृव्यवधूचरणयोर्वा दुःखमिदमुपायनीकुरु । साऽपि वार्तालापे वचनीय-लक्ष्यं मां करिष्यति । पूज्यपाद ! नेदं पितामहसविधे वाच्यम् । अन्यथा सोऽपि ग्रामीणजनसकाशेऽश्रूणि मोचयिष्यति । नैष वृत्तान्तो लघुभगिनीसमक्षे वाच्यः । नो चेत् सा श्वशुरालयं न गमिष्यति । हे रमणीयगुण ! दुःखं वरदर्शकसविधे निवेदनीयं येनाऽहं गृहेऽस्मिन् विवाहिता । हे वंशावतंस ! तं ब्राह्मणपुरोधसं प्रतीदं निवेद्यतां येन लग्ने शोधिते विवाहोऽत्रानुमापितः ।

अन्ते च विनिवेदयति भगिनी—हे कुटुम्ब-शील-धन ! इदं स्वमन-स्येव निधाप्यताम्, यादृशं कर्म, तादृगेव मे विपाकः ।

पुनरप्याह—सर्वं विपज्जालं प्रवेष्ट्य नद्यां त्यक्तव्यम् ; अर्थात् कोऽपि नाऽऽक्रोशितव्यः ।

× × ×

परिषदि महार्हे उत्कटासने ( कुर्सी ) स्थितः पिता पुत्रमेव केवल-मागच्छन्तं दृष्ट्वा शोचति········।

पुत्रो मर्मव्यथास्वरेण पितरमाह—जनक ! कलकलवाहिनी प्रवर्द्ध-माना यमुना नदीव वत्सा प्रियभगिनी रोदिति ।

जनकः (सरोषम्)—वत्स ! प्रियंवद ! किं ते बाह्वोर्जङ्घयोश्च बला-भावो घुणकीटप्रवेशो वा जातो येन रुदन्ती प्रियभगिनी सह नानीता ?

× × ×

महानसे वशंवदा कुलमहिला ननान्दरमदृष्ट्वा भोक्तुं समुपस्थितं पतिं भ्रातृजायाऽऽह—जीवनधन ! सौभाग्यसौरभ ! भुज्यताम्, ननान्दुः कुशलञ्च निगद्यताम् ।

पतिः—प्रियतमे ! श्रद्धारूपे ! प्रत्युत्पन्नमते ! अनागतविधात्रि ! गृहिणीपदं गौरवशीलं प्राप्य मद्भगिनी शशिनः कलेव विवर्धते !

( १ )

# अवतारविषयकजिज्ञासासमालोचनम् ।

ले० पं० अनन्तशास्त्री फडके, व्याकरणाचार्यो मीमांसातीर्थश्च ।
(पुराणेतिहासाध्यापक, राजकीयसंस्कृतकालेज, काशी) ।

अमरभारत्या मिलितप्रथमद्वितीयाङ्के प्रकाशितपरमात्मावतारकारणनिर्वचनसंज्ञकलेखे 'स्वीयेच्छाशक्तिमत्त्वमेव मुख्यं कारणम्' इति सिद्धान्तिते विषये केचन पूज्या महोदयाः संशय्य 'स्वीयाभिप्रायं तृतीयाङ्के ( १ ) 'इदं सम्पूर्णं जगदेव तस्य विभोरनन्तशक्तिशालिनः परमात्मनोऽचिन्त्येच्छाशक्तेर्लीलाक्षेत्रमस्ति । अतोऽवतारग्रहणाय विहाय सामान्यकारणं केनापि विशिष्टकारणेन भवितव्यम् । तदेव भगवता 'यदा यदा हि' इत्यादिना गीतायां स्वयमुक्तम्' । इति । तथा ( २ ) 'पुराणकाराणां च बुद्धस्य भगवदवतारत्वमभिप्रेतम्' 'यदि बुद्धो भगवदवतार एव तर्हि तेन कीदृशधर्मस्य स्थापनं कृतम्। तेन यत्कृतं तद्यदि धर्मस्थापनमेव तर्हि शङ्कराचार्यैस्तत्खण्डनाय किमर्थं प्रयासः कृतः' । "दैत्यानां नाशनार्थाय" इत्यादिवचनैर्बुद्धस्य मोहनार्थावतारत्वं, 'किमिदं सयुक्तिकम्' । ( ३ ) यथा कृष्णावसानस्य पश्चात्कलेराविर्भावः कथ्यते, ततो विपरीतदिशा बुद्धावसानानन्तरम् अशोकवर्धनस्य चिरस्मरणीयं सौराज्यं जातम्' । इत्यादिकम् । अत्र जिज्ञासासमालोचनात्पूर्वमस्माभिः पूर्वं प्रतिपादितस्य विषयस्य प्रकृतविचारोपयोगिनोंऽशस्य प्रदर्शनमुचितम् । (१) परमात्मनो भगवदवताराणां कारणनिर्वचनमभिप्रेतम् । नतु सृष्टिस्थितिदशायामुत्पथगामिनां धर्मनाशकानां राक्षसानां विनाशाय धृतानां केषांचनावताराणाम् । ( २ ) अतः सर्वावतारानुस्यूतकारणं सर्वप्रसिद्धकारणसमन्वयेऽभिप्रेते तस्य परमात्मन इच्छेत्येवाङ्गीकरणीयम् । इति[1] । अस्तु । यच्च कारणत्रयमभिप्रेतं जिज्ञासुमहोदयैः "परित्राणाय" इति भगवद्गीताश्लोकस्थं ( १ ) साधुपरित्राणम् ( २ ) दुष्कृद्विनाशः ( ३ ) धर्मसंस्थापनाचेति । तत्कथंचित्कारणबोधकमिति स्वीकारेऽपि वस्तुतो धर्मसंस्थापनेत्येवैकं कारणं संभवेत्। सा च कथं भवतीत्येतदर्थमे-

(१) एतल्लेखांशप्रदर्शनं पाठकमहोदयविचारसौकर्यार्थमेवेति ।

तदुक्तम् । "परित्राणाय साधूनां विनाशाय च दुष्कृताम्" इति । एवञ्चावतारस्य यदि कथञ्चिदिदमेकमिच्छाभिन्नं कारणमिति स्वीकारेऽपि सर्वावतारेष्वेतन्न संभवति । यतो ग्राहाद् गजेन्द्रमोक्षणार्थं धृतावतारे धर्मसंस्थापनाया अभाव एव । तथा कौरवसदसि परमपतिव्रताया द्रौपद्या लज्जारक्षणार्थं परमात्मनो वस्त्ररूपेण प्रादुर्भूतत्वमवतारतया भक्ताः कथयन्ति तत्र केवलभक्तपरित्राणमेव न तु दुष्टविनाशो धर्मसंस्थापना वा । अस्य 'परित्राणाय' इति वचनस्य फलबोधकत्वे तु यत्र धर्मसंस्थापना तत्रैव साधुपरित्राणदुष्टविनाशपूर्वकत्वं, नान्यत्र । अतः क्वचित् साधुपरित्राणं क्वचिदुभयम्, क्वचित्त्रयं चेति न विरोधः । यद्यप्येतत्कल्पनं कारणत्रयस्वीकारेऽपि समानमिति वक्तुं शक्यं, तथापि दुष्टनाशादिकारणेनावतीर्णस्य भगवतो दधिनवनीतादिचोरणं वस्त्रहरणं कदम्बवृक्षाऽधो रासलीलाकरणं कथं सङ्गच्छेत । दुष्टनाशानुकूलमेव तेन कार्यं कर्तव्यं न भिन्नम् । यदि च फलपरमेतत् स्वीयेच्छायाश्च कारणत्वं स्वीक्रियते तदा फलोत्पत्तिकालो यावन्नागतस्तावत्स्वेच्छया भक्तजनभजनसौकर्यार्थं लीलाकरणमपि सम्यक् सङ्गतं भवति ।

अपि चेच्छामात्रेण सर्वजगद्विनाशकशक्तियुतोऽपि परमात्मा कुतो मशकवत्कंसादिहननार्थं देवक्यादिमातृद्वारा प्रादुर्भवति । कस्माद्दैत्यान् स्वगणोपगणद्वारा न नाशयति । अथवा कस्माददैत्यान् सुमार्गधर्मप्रवृत्तान् न करोति । किंवा दैत्यसर्जनमेव कस्मान्न वारयति । अतीव सहजमेवेदं कार्यं, तदकृत्वा राक्षसंवर्धनं विधाय तदापीच्छामात्रेण नाशे कर्तव्ये स्वावतरणरूपं 'मशकहननाय शतघ्नीव्यापारणमिवोपहासास्पदं' कथं करोतीत्यादिशङ्काया उत्तरमिदमेव बलात्प्रदेयमापतति । अल्पज्ञैरस्माभिरचिन्त्यशक्तिमतः परमात्मनः कर्तव्यांशे किञ्चिदपि ज्ञातुमशक्यं, केवलं तस्य परमात्मन एतादृशीच्छैवेति कार्यं दृष्ट्वानुमातव्यम् । एवञ्चान्ततो गत्वा यदेव कारणतया स्वीयेच्छाशक्तिमत्त्वं स्वीकर्तव्यं तदेव प्रथमतः स्वीकारे कथं दोषास्पदमिति पाठकमहोदया एव विचारयन्तु ।

किञ्च 'जगृहे पौरुषं रूपम्' 'आद्योऽवतारः पुरुषः परस्य' इत्यादिषु सर्वथा पूर्वोक्तं कारणत्रयमेकं कारणं वा किमपि न संभवति, तादृशकारणाधारसृष्टेस्तदाभावात् । तत्रावश्यं स्वीयेच्छाशक्तिमत्त्वमेव स्वीकरणीयम् ।

किञ्च कारणस्य कारणत्वसंभवाय कार्यान्नियतपूर्ववृत्तित्वमवश्यं स्वीकार्यम्। एवञ्च भगवदवतरणस्य साधुपरित्राणादिकारणत्वेऽवतरणात्पूर्वं साधुपरित्राणादिकारणत्रयसत्ताया अपेक्षितत्वेन तदनन्तरं जायमानमवतरणं निष्फलं संपद्येत, सर्वग्रन्थविरोधश्च। तस्य फलबोधकत्वस्वीकारे न कोऽपि दोषः।

किञ्च 'परित्राणाय' इति श्लोकस्य पूर्वापरश्लोकदर्शनेन फलपरत्वमेव संभवति न कारणपरत्वम्। तथाहि—'बहूनि मे व्यतीतानि जन्मानि तव चार्जुन' इति श्रुत्वा कदाचिदर्जुनः संशयीत। अजस्य व्यापकस्य तव कथं प्रादुर्भावः—तदर्थं 'यदा यदा' इति श्लोकात्पूर्वश्लोके 'अजोपि सन्नव्ययात्मा' इत्याकारके 'स्वमायया' इति स्वीयावतारकारणं मायारूपं प्रोक्तम्, ततश्च कदावतरसीति शङ्कावारणार्थं स्वीयावतारकालकथनं कृतम्। ततोऽवतरणस्य फलं किमिति शङ्कायां फलपरमिदं वचनं 'परित्राणाय' इति ततश्चोपसंहारभूतं वाक्यम् 'जन्म कर्म च मे दिव्यम्' इत्याकारकम्। एवं च पूर्वापरश्लोकपर्यालोचनयेदं सुस्पष्टं प्रसिद्ध्यति, नेदं कारणपरं वचनं किन्तु फलपरमेव। कारणपरत्वस्वीकारे 'संभवाम्यात्ममायया' इति कारणत्वबोधकमाययेतितृतीयान्तपदव्यर्थतापत्तेः। तृतीयाश्रुत्या संभवरूपावतारकारणत्वमेव मायायाः सिद्ध्यति। माया चेच्छारूपा परमात्मनः शक्तिरेव 'मायाशब्दः क्वचिच्छास्त्रे हरिसामर्थ्यवाचकः' इति श्रीमद्वल्लभाचार्योक्तेः। पूज्यपादशङ्कराचार्यप्रभृत्याचार्यकृतव्याख्यामार्गानुसृतोऽयं मार्गः। उक्तं च आचार्यैः—'तत्तच्छ्लोकव्याख्याने। 'संभवामि देहवान् इव भवामि जात इवात्ममायया ऽऽत्मनो मायया न परमार्थतो लोकवत्'। 'यदा यदा' इतिश्लोकस्यावतरणिकायां—'तच्च जन्म कदा किमर्थं चेत्युच्यते-यदा यदा'इति। ततः 'किमर्थं'—परित्राणायेति। ततो 'जन्म कर्म च मे दिव्य'मिति श्लोकव्याख्याने 'जन्म—मायाजन्मकर्म—साधुपरित्राणादि' इत्युक्तम्। एवञ्च सुस्पष्टमेवैतन्न कारणपरं, किन्तु फलपरमिति।

( २ )

विष्णोर्दशावतारेषु भगवतो बुद्धदेवस्य परिगणनविषये पूर्वत एव प्रचलति मतद्वयम्। एके परिगणयन्ति दशावतारेषु तमपरे च न, तथापि तस्यावतारत्वे न विप्रतिपत्तिः। महामनसा तेन बुद्धदेवेन स्वीयावतारे

कारणत्वेनाभिमतं साधुपरित्राणादित्रयं (वस्तुतः फलत्रयमवतारे कारणं तु परमात्मन इच्छैव) सुसम्पादितं नवेति विचारणायां भगवता श्रीकृष्णेनेव तेन सम्यक्तया सम्पादितमेव फलत्रयमित्येवोत्तरं प्रदेयमापतति। तथाहि—धर्मसंस्थापनार्थमथवा साधुजनपरिरक्षणार्थं दुष्टविनाशः करणीय इति तु मान्यमेव सर्वथा। परन्तु स च कथं करणीय इत्यस्मिन्विषये कर्तुः परमात्मन इच्छैव प्रमाणम्। कदाचिद्येषां मतविपरिणामासंभावना तेषां देहनाशेन साधुपरित्राणं स्यात्। कदाचिच्च दुष्टमनोविपरिवर्तनेनाचारपरिवर्तनेन च तेषां साधुत्वं सम्पाद्य साधुरक्षणं स्यात्। कदाचिच्च साधुमार्गस्वीकारायोग्यानां तद्योग्यमार्गप्रदर्शनद्वारा वास्तविकसाधुतस्तेषां भेदं विधाय तद्योग्यधर्मरतत्वं तेषां कृत्वा साधुपरित्राणं स्यात्। एवञ्च दुष्टत्वनाशे दुष्टविनाश एव। भगवता बुद्धदेवेनैनं तृतीयमार्गमनुसृत्य साधुपरित्राणं कृतम्। परमदयालुतया देहनाशार्हानामपि तेषां देहविनाशमकृत्वा साधुतः पृथक् कृत्य तेषामुद्धारार्थं नूतनया प्रसिद्धं धर्मं विधाय तद्योग्येषु तस्य प्रचारः कृतः। अतो भगवतो बुद्धदेवस्यावतारकार्ये प्रायः साधुपरित्राणादिफलत्रयमपि सफलम्। उक्तञ्च मेरुतन्त्रे—( पुरश्चर्यार्णवे द्वि० खं० पृ० ६९१ )

अथातः संप्रवक्ष्यामि बौद्धमन्त्रं महाफलम्।
सत्य(म)त्वान्न द्विजातीनामधिकारो हि कर्हिचित् ॥१॥
वाममार्गरता विप्राः कुण्डका जातिविच्युताः।
हीना वैदिकसंस्कारैः प्रमादात्स्वेच्छतां गताः ॥२॥
गोलकाश्च तथा जात्या कायस्थादय एव च।
बौद्धं विष्णुं समाराध्य भुक्तिं मुक्तिं प्रयान्ति ते ॥३॥ इति।

एतेनैतत्स्पष्टं प्रतीयते—बुद्धदेवावतरणपूर्वकाले सत्कृत्यकारिषु निस्पृहेषु ब्राह्मणेषु धर्ममार्गं परित्यज्य लुब्धा यथेष्टाचारिणो द्विजातयो ब्राह्मणादिनाममात्रधारिणो मिलिता आसन्। येषांच मेलनेन साधवोऽतीव पीडिता आसन्। बुद्धदेवेन चैतादृशानां ब्राह्मणादिमानिनां पृथक्करणेन सम्यक्तया साधुपरित्राणं कृतम्। अत्यन्तदयालुत्वाच्च दुर्जनानामपि तेषामुद्धारो भवत्वितीच्छया धर्मप्रणयनं च। श्रीमद्भिः पूज्यपादैः शङ्कराचार्यैर्यत्तन्मतस्य खण्डनं कृतं तदपि सम्यगेव। यतो मनुज-

प्रवृत्तिरेवैतादृशी यत्समुदितजनाचारस्वीकरणं नाम। अधुनापि काले दरीदृश्यत एतत्। सज्जना अपि जनाः कदाचित्समुदितराजाश्रित-बुद्धधर्मानुयायिजनाचारं दृष्ट्वायमेव साधुराचारोऽवश्यं परिपालनीय इति कदाचिन्निश्चित्य स्वीयश्रौतसाधुमार्गात्परिभ्रष्टा भवेयुस्तन्निवारणार्थं तत्खण्डनमप्यावश्यकमेव। अथ चात्रैतत्प्रसङ्गेनोक्तम्—'कृष्णाव-सानस्यानन्तरं कलेराविर्भाव' इति। अस्य कथनस्यायमभिप्रायः प्रतीयते, श्रीकृष्णनिजधामगमनानन्तरमेव कलिप्रादुर्भावः। कलिप्रादु-र्भावो नाम—अधर्मप्रादुर्भावः, अधर्मप्रादुर्भावो नाम श्रीकृष्णस्थापित-धर्मविनाश इति। एतत्स्पष्टतयैवोक्तं पूर्वं श्रीमद्भिर्जिज्ञासुमहोदयैः 'यद्भगवतो वैकुण्ठारोहणात् षट्त्रिंशद्वर्षेभ्यः परमेव कलेराविर्भावो जातः, अधर्मसाम्राज्यं प्रसृतमिति, इत्यादिना। परन्तु श्रीकृष्णसमय एव कलिप्रादुर्भाव आसीदित्येव प्रमाणतो ज्ञातुं शक्यते। तथाहि मुचु-कुन्देन राज्ञा पादप्रहारिणं कालयवनं विनाश्य श्रीकृष्णं स्तुत्वा गुहातो बहिरागतेन वृक्षमनुजानां ह्रस्वत्वदर्शनेन कलिप्रादुर्भावमनुमायान्यत्र गमनं कृतमिति श्रीमद्भागवतवाचकानां न तिरोहितम्। तथाहि—

इत्थं सोऽनुगृहीतोऽङ्ग कृष्णेनेक्ष्वाकुनन्दनः।
तं परिक्रम्य संनम्य निश्चक्राम गुहामुखात्॥
स वीक्ष्य क्षुल्लकान्मर्त्यान् पशून् वीरुद्वनस्पतीन्।
मत्वा कलियुगं प्राप्तं निःसङ्गो मुक्तसंशयः॥ (श्री० भा० १०-५३-१-३)

एवञ्च स्पष्टमेवैतेन ज्ञायते कृष्णावतारकार्यसमय एव कलिः प्रादुर्भूत इति। बुद्धाख्यानानन्तरमशोकस्य चिरस्मरणीयं सौराज्यं जातम्'। अत्रेदं विचारणीयम्। साम्राज्यं जातमित्यत्र न विवादः। सौराज्यं जातमयमंशो विवादास्पदः। सौराज्यं नाम किम्? अत्र देशे यवनाधिपत्याभाव इति चेत्तदा रावणराज्यमपि सौराज्यं भवेत्। यदि बहुकालं साम्राज्यस्थितिरिति! सापि रावणराज्य आसीदेव। यदि श्रीकृष्णस्थापितश्रौतधर्माचरणपूर्वकं राज्यं प्रचलितं स्यात्तदेव सौराज्यं वक्तव्यम्। नो चेद्रावणराज्यमपि राक्ष-सानां कृते सौराज्यमासीत्। 'श्रीकृष्णस्थापितधर्मः षट्त्रिंशद्वर्षमितकाल एव प्रचलित' इत्यादिककथनमपि न सर्वमान्यम्। यतः श्रीकृष्णस्य कालः प्राचीनमतेन भारतीययुद्धकालसमः। भारतीययुद्धं च गते किञ्चिदधि-

कपञ्चसहस्रवर्षपरिमितकाले संजातम्। नवीनमतेनापि शकप्रारम्भात्पूर्वं ६३०६ वर्षमितकाले जातम्। (लेले विसाजीपन्तानां मतम्) शकप्रारम्भात्पूर्वं ३१८० परिमितकाले। (वैद्य चिन्तामणिमहोदयानाम्) शकप्रारम्भात्पूर्वं २५२६ वर्षपरिमितकाले। (वराहमिहिरराजतरङ्गिणीकारयोर्मतम्) सञ्जातम्। इत्याद्यनेकान्यत्र मतानि सन्ति। अस्तु श्रीकृष्णानन्तरं बुद्धदेवस्तु सार्धसहस्रवर्षद्वयपरिमितकाले संजात इत्यस्मिन्विषये प्रायो मतैक्यमेव। एवञ्च श्रीकृष्णस्थापितप्राचीनधर्ममतं सार्धसहस्रवर्षद्वयमितकाले प्रचलितम्। तत्काले कदाचन साम्राज्यं न भवेत्, परन्तु सौराज्यमवश्यमेवासीत्। बुद्धमतं तु तदनन्तरं प्रादुर्भूतैराचार्यैः शङ्कराचार्यैः शकप्रारम्भानन्तरं ६१० वर्षमितकाले स्थितैः खण्डितमेवातो बुद्धमतं स्वस्थापनानन्तरं कदाचित्सहस्रवर्षपरिमितकाले प्रचलितम्। वस्तुतः शङ्कराचार्येभ्योऽपि पूर्वं सञ्जातैर्भट्टकुमारिलपादैरेव विशेषतया बौद्धमतं खण्डितं नाचार्यैः। अस्तु। अपि च पूर्वोक्तदिशा भगवता बुद्धेनापि प्राचीनमपि श्रीकृष्णेन स्थापितमित्यादिना प्रसिद्धं श्रौतं मतं रचितुं भ्रष्टानां कृते नूतनं मतं स्थापितम्। अतस्तत्कालेऽपि श्रीकृष्णस्थापितमतमासीत् तदनन्तरमपि। अत्राप्यनेकाः शङ्काः प्रादुर्भवेयुः—श्रीकृष्णस्थापितमतस्य सर्वथा साधुत्वे कथं ब्राह्मणानां वाममार्गरतत्वमित्यादिकाः। तत्रेदमेवोत्तरं तद्ब्राह्मणानां दुरदृष्टवशादिति। यथा श्रीमहाविष्णुसन्निधौ सर्वदा तिष्ठतोरपि जयविजययोः सनकादिकानामपमानकरणेच्छा दुरदृष्टवशात्सञ्जातेति। भवत्वत्र निवेदिता अंशा इम एव। (१) अवतारकारणं परमात्मन इच्छैव न तु साधुपरित्राणादिकं, तस्य फलरूपत्वात्। (२) श्रीकृष्णेन धर्मस्थापनं कलावेव कृतम्। तत्स्थापितधर्मस्थितिरपि बुद्धदेवस्थापितधर्मकालापेक्षयाधिककालपर्यन्ताऽसीत्। तदा च सौराज्यमपि। (३) बुद्धदेवेन हीनब्राह्मणानां कृते धर्मस्थापना कृता तदवतारकार्येऽपि साधुपरित्राणादिफलत्रयं दरीदृश्यते। (४) श्रीशङ्कराचार्यैस्तत्खण्डनं च सतां ब्राह्मणादीनां तन्मते प्रवृत्तिर्माभूदितीच्छयैव कृतम्। इति।

अतः परं 'बुद्धावतारविषये वर्तमानहिन्दुसमाजे ये विचाराः प्रचलन्ति ते किमुचिता अनुचिता वा' इत्यादिविषयको विचारोऽपेक्षितोऽस्ति। स च धर्मशास्त्रप्रणीतैरैतिहासिकैश्च करणीयः। अहमपि

कृतमेतद्विषयकं स्वीयं वक्तव्यं सत्यवसरे पाठकानां पुरतोऽवश्यं निवेदयामि । अस्या जिज्ञासाया उत्तरं चतुर्थसङ्ख्यायामेव प्रदेयं परन्त्वन्येषां महाभागानामुत्तरमागच्छेदित्यभिप्रायेणैतावत्कालपर्यन्तं प्रतिपालितम् । अतो विलम्बः सर्वथा क्षन्तव्यः पाठकवरैरिति शम् ।

---

## हास्यम्

ले० नारायणशास्त्री खिस्ते

( १ )

न्यायाधीशः—( अपराधिनं प्रति ) चौर्यापराधकरणनिमित्तं तव सप्त वर्षाणि कारागृहवासदण्डः, शतं रूप्यकाणि द्रव्यदण्डश्च क्रियते ।

अपराधी—न्यायमूर्तिभिर्मदुपरि दयां विधाय कृतो दण्डः परिवर्त्यतामिति मे प्रार्थना ।

न्यायाधीशः—साधु, एवं तर्हि सप्तरूप्यकाणि द्रव्यदण्डः वर्षशतं कारागृहवासदण्डो दीयते । सम्पन्नं न वा ते समीहितम् ? ।

( २ )

एकः शिष्टो धावन्नेव दैनिक "भारत" सम्पादकस्य कार्यालयं प्रविश्य सम्पादकमाह 'सम्पादक ! किं कृतं भवता ? मयि जीवत्येव मम मृत्युवार्ता भवताऽद्यतनेऽङ्के प्रकाशिता । इदमसत्यं भवता श्वस्तनेऽङ्के मम जीवितत्तां प्रकाश्य परिमार्जनीयम् ।

सम्पादकः—नहि नहि भोः, नैवं कर्तुं शक्यते । एकवारं स्वयं लिखितस्य स्वयमेव खण्डनमस्माकं नियमविरुद्धम् । किन्तु भवतः सन्तोषाय श्वस्तनेऽङ्के भवतः पुनर्जननवार्ता प्रकाशयितुं शक्यते ।

( ३ )

कविः—(सम्पादकं प्रति) मम कविता भवता किमर्थं न प्रकाश्यते । सा खलु मम प्राण इव वर्तते ।

सम्पादकः—( सस्मितम् ) परेषां प्राणग्रहणं वयं न कुर्मः, अतः सा कविता भवदन्तिकं सधन्यवादं परावर्त्यते ।

---

## आत्मश्लाघा

ले०—काशीस्थराजकीयसरस्वतीभवनपुस्तकालयोपाध्यक्षसाहित्याचार्य-साहित्यवारिधिखिस्ते इत्युपाह्व पं० नारायणशास्त्रिणः।

नीतिशास्त्रकारैर्निषिद्धे अपि आत्मश्लाघाश्रवणकरणे बुधैरपि समुपस्थिते समुचिते समये निःशङ्कं विधीयेते—इयं वस्तुस्थितिः केन वा सुधिया समाच्छादयितुं शक्यते? कदाचिज्जनलज्जया मनोलज्जया वा कश्चित्स्वयमात्मानं न श्लाघेत, किन्तु परैरनुष्ठीयमानां स्वश्लाघां शृण्वन् बाढमुत्पुलको भवेदेव, वचसा केवलं 'किमुच्यते, किमुच्यते; न ममेदृशी योग्यता' इति स्वश्लाघाश्रवणानभिलाषं नाटयेत्। एतावत्येव किल साम्प्रतिकी सभ्यतापद्धतिः।

ममाप्येकदा एवंविधसभ्यताभिनयनं कर्तुमापतितम्। परंतु सोऽभिनयो विलक्षण एवासीत्।

काशीस्थराजकीयसंस्कृतमहाविद्यालयेऽधीत्य तत्रत्यां साहित्याचार्यपरीक्षां ससंमानमुत्तीर्य लब्धसुवर्णपदकः, अन्तर्ज्वलद्भिरपि बहिः कृतकस्मितं वहद्भिः सतीर्थ्यैः 'प्रथमश्रेण्यां प्रथमः समुत्तीर्णस्त्वमाचार्योऽसि, सुवर्णपदकेनापि सत्कृतोऽसि, कवित्वं लेखसौष्ठवं च ते गुरुभिरपि प्रशस्यत एव। अथेदानीं यत्र कुत्राऽपि विपुलवेतनां वृत्तिमनायासेन लप्स्यसे, धन्योऽसि, भाग्यवानसि'। इतिश्लाघ्यमानस्तदुक्तिमवितथां मत्वा वृत्तिलाभं सुकरमेव समभावयम्। यदा प्रत्यक्षं कार्यक्षेत्रेऽवातरम्, तदा बाढमज्ञासिषम्—यद् वृत्तिर्न गुणानपेक्षते, किंतु महतामनुरोधान् प्रमाणीकरणानि च। दरिद्रस्य निःसहायस्य मम कृते के महान्तोऽनुरोधं कुर्युः? इत्थं पाठशालाऽध्यक्षाणां द्वाराणि भ्रमन् सर्वत्रैव वाच्यव्यङ्ग्यमर्यादाभ्यां नकारध्वनिमेव श्रावं श्रावं नितरां नैराश्यमुपागमम्।

अथैकस्मिन् दिवसे मम पूर्वपरिचितः शास्त्रिपरीक्षायामेव द्वित्रिवारमसाफल्यात्परित्यक्ताध्ययनोऽपि काव्यरसिकाय धनिकपुत्रो घनश्यामोऽकस्मादेव मम गृहमुपाजगाम। धनिकस्यापि तस्य मम दरिद्रस्य गृहेऽभूत-

पूर्वमागमनमालोक्य सुतरां विस्मितोऽहं तमप्राक्षम्—'किमद्य भानुर्भ्रान्तः यद्विहाय प्राचीमपरस्यां समुदेति। किं सुदामगेहे लक्ष्मीपतिः स्वयमुपस्थितः ? कोऽयं प्रकारः ? किमप्यस्तु, सर्वथा स्वागतं मनोरथपथातीतस्य सौभाग्यस्य' इति।

स तु धूर्तः मम दुरवस्थानिमित्तं खेदमनुभवन्निव दुःखवर्ती मुखमुद्रां विधाय मामंसे विघट्टयन्नाह—'मित्र! श्रुतवानस्मि भवतो वृत्तिप्राप्तिप्रयासवैफल्यम्, भवदर्थमेव चिन्त्यते मयैक उपायः, यद्यनुमन्यते भवान् तर्हि वरम्' इति।

अहं तु बुभुक्षित इव किञ्चिदप्यविचार्यैव तमवादिषम्—'सखे! यद्वा किमपि भवताऽऽदिश्येत, तत्सर्वमपि कर्तुं सन्नद्धोऽस्मि। येन केनाप्युपायेन वृत्तिर्मे भवतु, सीदति मे कुटुम्बम्' इति।

तदाकर्ण्य ईषत्स्मयमान इव सोऽब्रूत—'मित्रवर। जानात्येव भवान् यत् अध्ययनावस्थात एव एकं सर्वाङ्गसुन्दरं संस्कृतमासिकपत्रं संचालनीयमिति मम मनोरथ आसीत् इति। मम पितुरुपरमात्परत एव चिराभिलषिते संस्कृतमासिकपत्रप्रकाशने मया प्रयतितुमारभ्यते। तत्रेदृशी मम योजना वर्तते—

"गीर्वाणवाक्सुधा" नामिका मासिकपत्रिका प्रचारणीया, तस्याः संपादकः संचालकश्चाहमेकल एव भवेयम्, भवता पुनः स्वगृहस्थितेनैव लेखादिकं विलिख्य सर्वमपि संपादककार्यं करणीयम्। तदर्थं प्रतिमासं भवते पञ्चाशन्मुद्राः प्रदास्यन्ते। वस्तुतः संपादनकार्यं कुर्वताऽपि भवता बहिर्नैव प्रकटनीयम्। अहमेव लोके संपादक इति विदितःस्याम्। किंच भवता पत्रिकायां स्वलेखसौष्ठवस्य पराकाष्ठा प्रदर्शनीया, यदि न रोचेत जनतायै पत्रिकास्वरूपं, तदाऽगत्या चत्वारिंशन्मुद्रास्वेव संतुष्टो भूतनाथपण्डितो मया प्रच्छन्नसंपादकपदे स्थाप्येत। केवलं भवतो वर्तमानां दुरवस्थामालोक्य प्राचीनसौहार्दानुस्मरणेन दशमुद्रा अधिकं प्रदाय भवान्नियुज्यते' इति।

अहं तु तत्तस्य वचनमाकर्ण्य निपतित इव विहायसः, किंकर्तव्यतामूढो भूत्वा तस्य तां दुर्बुद्धिमालोच्य भृशं विस्मितो दुःखितश्चाभूवम्। सहसा तं निर्भर्त्सयितुं कृतमना अपि स्वकीयां दुरवस्थां निभाल्य

मदभावे भूतनाथपण्डितस्य नियुक्तिसंभावनां च विभाव्य कथमप्यात्मानं प्रकृतिस्थं समपादयम्। अवोचं च—'घनश्याम! त्वं धनिकोऽसि, किं पञ्चाशन्मुद्रिकाभिर्मम बलं बुद्धिं नाम च क्रीणासि ?'

तेनोक्तम्—'सत्यमूहितं भवता, भवान्मम मित्रमिति भवदर्थे पञ्चाशन्मुद्राः। अपरथा चत्वारिंशन्मुद्रामात्रं प्रदाय भूतनाथपण्डितः सुलभ एव' इति।

अहं तु तेन तस्य स्पष्टवचनेन मूकीकृत इव किमपि वक्तुमक्षमः क्षणं तूष्णीं स्थित्वा पर्यवसाने अगत्या तां प्रच्छन्नसंपादकवृत्तिं स्वीकृतवानेव।

मम स्वीकृतिवचनमाकर्ण्य जालबद्धं मृगमालोक्य व्याध इव संतुष्टो घनश्यामस्तत्क्षणमेव मम हस्ते पञ्चाशन्मुद्रा निधायावोचत्—गृह्यतामिदमग्रिमं मासिकम्। पत्राणि, मसीभाजनं, लेखनीश्च क्रेतुं रूप्यकद्वयं चेदमस्त्वित्युक्त्वा तदपि मद्धस्ते निहितवान्। 'सप्ताहानन्तरमहं पुनरागमिष्यामि, तावत् भवता सयत्नं पत्रिकाप्रथमाङ्काकारः संपाद्यताम्।' इति चाभिधाय घनश्यामो निर्गतः।

अहं च ततः स्वनामविक्रयखिद्यमानमानसोऽपि कुटुम्बभरणोपयिकवृत्तिलाभेन कथञ्चिदाश्वस्तचेताः पत्रिकाकार्यं प्रारभे।

× × ×

यथासमयं प्रकाशिता पत्रिका। उपरितनपृष्ठे स्थूलस्थूलैः सुवर्णाक्षरैः संपादकस्य घनश्यामस्य नाम विराजते। सहायकत्वेन वा लेखकत्वेन वा कुत्रापि मम नामोल्लेखो नास्ति। रसिकमण्डले परमादरपात्रमभूत्पत्रिका। सर्वेऽपि मुक्तकण्ठं स्तुवन्ति संपादकं घनश्यामम्। न कोऽपि जानाति यन्ममाप्यस्ति कश्चित्संबन्धः पत्रिकयेति। इदं सर्वं दृष्ट्वा अन्तरेव जाज्वल्यमानोऽप्यहमात्मनो दुर्दैवं निन्दन्नगत्या तूष्णीमेवासम्।

इत्थं षण्मासा व्यतीताः। पत्रिकेदानीं संस्कृतसाहित्यगगने राकाशशाङ्कसदृशी पूर्णतेजसा प्रकाशते। त्रिसहस्रसंख्या ग्राहकाः संजाताः। इत्थमुन्नतिशिखरमारूढां पत्रिकां दृष्ट्वा घनश्यामो मम मासिके दशमुद्रावृद्धिमकरोत्। ममापि गार्हस्थ्यमित्थं सुखेन चलति।

तस्मिन्नेव वर्षे लवपुरे संस्कृतसाहित्यसम्मेलनमहाधिवेशने निमन्त्रितोऽहमगमम्। तत्रापि सर्वैर्मुक्तकण्ठमस्माकं पत्रिका श्लाघिता

घनश्यामश्च 'साहित्यसुधाकर'पदव्या संमानितः। अवसिते महाधिवेशने पुनरपि धूमशकट्या स्वस्थानं परावर्तमाने मयि संमेलनार्थं समागतेष्वन्यतमो विश्वनाथपण्डितः सहैव मया धूमशकटीमारुरोह।

विश्वनाथस्य कुत्सितप्रकृतितां जानन्नहं तेन सहालपितुं नैच्छम्। पुस्तकमेकमुद्घाट्य तदेव स्वमुखाग्रे कृत्वा ऽतिष्ठम्।

परन्तु खलो विश्वनाथः किं तत्सहते? स तु मम करात्पुस्तकमाच्छिद्य सासुवाच—'भोः! संमेलनं कथमभूत्?'

मयोक्तं—'समीचीनमेव'।

पुनः सोऽब्रूत—"गीर्वाणवाक्सुधा" पत्रिकायास्तु भूरि प्रशंसा कृता सर्वैः। तत्तु योग्यमेव। पत्रिका सत्यमेव प्रशंसार्हा। तत्रत्यं सर्वमेव प्रशंसास्पदम्। संपादकीयमतीव सुन्दरं भवति। कवितामाधुर्यं तु निरुपममेव। लेखयोजना, मृदुः परिहासः, समालोचनानि च संपादकस्य सिद्धहस्ततां प्रगाढं पाण्डित्यं च प्रकटयन्ति इति।

अहं तु तेन स्वकृतिप्रशंसाश्रवणेन संतुष्टान्तरोऽपि स्वनाम्नोऽविदितत्वात् खिद्यमानः केवलं 'हुँ' 'हुँ' इत्येवमुत्तरं दत्तवान्।

अथ विश्वनाथो मम किञ्चित्समीपतरमुपसृत्य कर्णे कथयन्निव शनकैरवोचत—'गीर्वाणवाक्सुधाया येयमनुपमा प्रशंसा सर्वैः क्रियते, सा तु योग्यैव, किन्तु घनश्यामः साहित्यसुधाकरपदव्या यत्समभाव्यत, तदयोग्यमेव। गीर्वाणवाक्सुधासंपादनेऽपि रहस्यं वर्तते, किं न ज्ञायते भवता?, इति।

अहं तु तेन तस्य वचसा चकित इवाभवम्। अचिन्तयं च—'किमयं मदीयं रहस्यं जानाति? अहमेव वास्तविकः संपादक इति'।

पुनरपि सोऽब्रूत—मूर्खो घनश्यामः किमीदृग्लिखितुं पारयेत्? यः खलु पत्रिकाया वास्तविकः संपादकः, स खलु प्रौढो विद्वान् सुलेखकः सुकविश्चास्ति। अत एव पत्रिकाया गौरवमस्ति।

अहं तदाकर्ण्य 'अयं वास्तवं रहस्यं जानाति, अतो मामेव प्रशंसती'ति निश्चित्य तत्कृतां प्रशंसामात्मीयां मत्वा चेतसि भृशं हृष्टः स्मयमानोऽतिष्ठम्। अचिन्तयं च—'यदस्मिन्विशाले जगति चेदेकोऽपि वास्तविकं मां पत्रिकासंपादकं, मम योग्यतां च जानाति, तावताऽपि वरम्' इति।

अथ विश्वनाथः पुनरधिकतरं समीपमुपसृत्य कर्णे जपन्निव शनैर्जगाद—'किं जानाति भवान्, कस्तस्य वास्तविकः संपादक इति ?'

अहं तु 'अयं ममैव नाम कथयेत्' इति निश्चिन्वानस्तन्मुखादेव तच्छ्रोतुकामोऽवोचम्–'न, न; नाहं जाने; तद्भवतैव कथ्यताम्' इति।

स किंचिद्विहस्येतस्ततः पश्यन् निभृतमब्रूत—'अहमेव वास्तविकः संपादकः, मयैव सर्वे लेखा लिख्यन्ते। कविता अपि मामकीना एव। संपादकीयमपि मयैव लिख्यते। अत एव पत्रिकाया इत्थमभूतपूर्वा प्रशंसा भवति। इदमेव रहस्यम्।'

श्रुत्वेदं तस्य वचनमहं स्वर्गादिव नरके निपतितो न किञ्चिदवादिषम्। तावदेवास्मदवतरणस्थानमपि संप्राप्तम्। अहं चात्मश्लाघाश्रवणपातकान्मुक्तमात्मानं मत्वा सुखित इवाभवम्।

---

## मुदिरं प्रति—

अये! मुदिर! मोहनं नयनयोश्चिरं ते वपु-
र्निरीक्ष्य मनसा ममाऽमृतरसाशया वल्गितम्।
मुहुः स्तनितडम्बरप्रवण! नाऽधिकं कथ्यते
मदीयकरुणोक्तिभिः कथमपि प्रिय! स्या द्रुतः॥

—चातकस्य

---

सप्तमाङ्के प्रकाशितायाः प्रहेलिकाया यथार्थम् "सत्यध्यानः" इत्युत्तरं यैः प्रदत्तं तेषां नामानि—

१ पं० गजानन शास्त्री खिस्ते, काशी ।
२ „ वामनाचार्य रुट्टि, बदामी ।
३ „ गोविन्द शर्मा सुरपुरकर, काशी ।
४ „ रामावतारमिश्र शास्त्री, साहित्याचार्यः अध्यक्ष-सनातन धर्मपुस्तकालय, चिकनौटा ।
५ „ केशवाचार्यः, बागल कोट ।
६ „ रामाचार्यः नागरहल्ली, विजापूर ।
७ „ सत्यवीराचार्यः कोर्लहल्ली, करजगि ।
८ „ बालशास्त्री थिटे, प्रधानाध्यापक-शारदामन्दिर, भोर ।
९ „ हरगोविन्दमिश्रः व्याकरणसाहित्याचार्यः, काशी ।
१० „ चन्द्रभट्ट अण्णभट्ट जोशी, आलमेल ।
११ „ रामचन्द्रशर्म शास्त्री, प्रधानाध्यापक-गिरिधारीलाल गोपालचंद बिहाणी संस्कृत विद्यालय, सगरिया ।
१२ „ विचारदास शास्त्री, जामनगर ।
१३ „ धुण्डिराजशास्त्री सप्रे, काव्यसांख्यवेदान्ततीर्थः, इंदूर ।
१४ „ चिमनलाल शर्मा पंड्या, व्याकरणशास्त्री काव्यतीर्थः, भद्रपुर ।
१५ „ बोधरायाचार्य, शीर्नहल्लि ।
१६ „ गजानन शंकर गोडबोले, उज्जैन ।
१७ „ केदारनाथ ओझा, न्याय व्याकरणाचार्यः, साहित्यसिन्धुः, प्रधानाध्यापक-श्रीरघुवर विद्यालय, शींगडामठ ।
१८ „ सुरजनदासः साहित्यशास्त्री, व्याकरणाचार्यः अध्यापक—श्रीदादू महाविद्यालय, जयपुर ।
१९ „ श्रीनिवासाचार्य बुर्लि, बेलगाँव ।
२० „ रामाचार्य गलगली, बेलगाँव ।
२१ „ नवरत्न गिरिधरशर्मा, झालावाडराजगुरुः, झालरापत्तन ।
२२ „ व्रजमोहनशर्मा काव्यतीर्थः, विशारदः, काशी ।
२३ „ गोविन्द अनन्तशास्त्री जोगलेकर, करमाला ।
२४ „ ज्यो० कृष्णशंकर केशवराम रैक्वः, सूरत ।
२५ „ कृष्णराव व्यास एम्० ए०, प्रयाग ।

---

## समस्यापूर्तयः।

—:❀:—

( वस्तु हस्तिमुखमस्तु वः श्रिये )

### काशिकानाम्

क्वीन्स-इंटरमीडिएटकालेजाध्यापक-साहित्याचार्य महामहोपाध्याय-
पं० लक्ष्मणशास्त्रितैलङ्गानाम्—

व्यस्तविघ्नमपहस्तिताऽशुभं निस्तुलं किल समस्तसंसृतौ।
आस्तिकावलिविहस्तताऽपहं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

—:०:—

साहित्यशास्त्रि पं० खिस्ते-बटुकनाथशास्त्रिणाम्—

संस्तुतं सुरगणैरनुक्षणं, निस्तुलेन वपुषा विराजितम्।
अस्तिवादिजनशर्मकर्मठं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥
रक्तचन्दनविलेपनोल्लसत्सान्द्रपाटलिमसुन्दराननम्
तुन्दिलं बहलमोदकाऽशनाद्वस्तु हस्तिमुखमस्तु वः श्रिये ॥२॥

—:❀:—

साहित्याचार्य पं० केशवदत्तपाण्डेयानाम्—

अखिलाऽद्यविघ्नहरणाय विधुतनिजलम्बसत्करम्।
ललितमिह किमपि देवनुतं ननु वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥[1]
के[1]ऽपि कानपि सुरानुपासतां शर्मदान् प्रियजनाः! परन्तु तत्।
वस्तु, हस्तिमुखमस्तु वः श्रिये स्यन्दमानमदगण्डमस्ति यत् ॥२॥

—:❀:—

पं० हरिदत्त पाण्डेय साहित्यशास्त्रिणाम्—

श्रीगणेश इति लोकविश्रुतं यच्छिवाशिवयुगाङ्कलालितम्।
दैवतं निखिलविघ्नहारि तद् वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

———

१—रम्यं, ललितं नाम वृत्तं च।

१—प्रतिचरणं प्रथमाऽक्षरयोजनया "केशवस्य" इति ज्ञेयम्।

पं० नारायणशास्त्रिद्राविडानाम्—

निस्तरीतुमतिदुस्तरां स्थितिं विस्तरेण मुनयः स्तुवन्ति यत् ।
तत्समस्तजगतस्तमोऽपहं वस्तु हस्तिमुखमस्तु वः श्रिये ॥ १ ॥

——:०:——

पं० मलशङ्करशुक्लानाम्—

अग्रगण्यमपि मूषकस्थितं विघ्ननाशनपटु स्तवार्चितम् ।
दानवारिचितगण्डभित्तिकं वस्तु हस्तिमुखमस्तु वः श्रिये ॥ १ ॥

——:❀:——

उदयप्रतापकालेजाध्यापक साहित्याचार्य पं० अनन्तरामशास्त्रिवेतालानाम्—

निस्तुलाकृति मनस्तमस्ततिव्यस्तिविस्तृतगभस्तिमद्द्युति ।
ध्वस्तविघ्नमखिलास्तिकैः स्तुतं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥
आस्तिकाऽऽनमितमस्तकार्चितं शस्तसद्गुणमपास्तदूषणम् ।
प्रस्तुतार्थविधये स्तुतं जनैर्वस्तु हस्तिमुखमस्तु वः श्रिये ॥२॥

———

मारवाडी संस्कृतकालेजाध्यापक न्यायाचार्य भट्टराई इत्युपाह्व—
पं० पद्मप्रसाद उपाध्यायानाम्—

पाशचक्रसृणिसङ्गसज्जितं वाजि[1]मन्त्रगणराजिराजितम् ।
द्रागदभ्रप्रबलविघ्नवैरिणो वस्तु[2] हस्तिमुखमस्तु[3] वः श्रिये ॥१॥

———

ज्योतिर्विद् पं० श्रीनाथशास्त्रिवेतालानाम्—

वस्तुतोऽस्ति गणपस्तु स प्रभुर्यस्तु चास्तिकवरैः स्तुतो मुखे[4] ।
वस्तु नास्ति भुवि तत्स्तुतावतो वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

———

(१) वाजिनः = अश्वा बाणाश्च ।
(२) सैन्यं गणपतिरूपं च ।
(३) गजप्रधानं गजाननं च ।
(४) मुखे—कार्यारम्भे ।

हिन्दूविश्वविद्यालयप्राच्यविद्याविभागाध्यापक साहित्यशास्त्राचार्य-
पं० सीताराम जयराम जोशी एम्० ए० शर्मणाम्—

प्रास्तशस्तमदवारिमस्तकन्यस्तनिस्तलकिरीटभास्वरम् ।
प्रस्तुतास्तिकनुतिस्तुतं सुरैर्वस्तु हस्तिमुखमस्तु वः श्रिये ॥ १ ॥

---

राजकीयसंस्कृतकालेजाध्यापकसाहित्याचार्य मानवल्ल्युपाख्य-
पं० भालचन्द्रशास्त्रिणाम्

वस्तुतः स्तवनपात्रमास्तिकैः प्रस्तुतेषु विषयेषु संस्तुतम् ।
अस्तदोषमतिविस्तृताशयं वस्तु हस्तिमुखमस्तु वः श्रिये ॥ १ ॥

---

पं० ( मैसूर ) रेवणसिद्धदेवानाम्—

सर्वकर्मसु निरन्तरायकं, पूर्तिकामजनतादिपूजितम् ।
ईप्सितार्थसुरशाखिसन्निभं वस्तु हस्तिमुखमस्तु वः श्रिये ॥ १ ॥

---

गोतमोपाह्व शालिग्रामशर्म आयुर्वेदाचार्याणाम्—

मस्तकास्तिकजनास्तनागजं ध्वस्तविघ्नगसमस्तसाहसम् ।
गलस्तमस्तुनिभनिस्तुषौदनं वस्तु हस्तिमुखमस्तु वः श्रिये ॥ १ ॥

---

कटिंग-मेमोरियल-हाइस्कूलहेडपण्डित साहित्याचार्य-
पं० जगन्नाथशास्त्रिहोशिङ्गनाम्—

नास्तिकास्तिकतमस्तिरस्क्रियाव्यस्तमस्तमितदुस्तराशिवम् ।
वस्तुतस्तु सकलस्तुतं परं वस्तु हस्तिमुखमस्तु वः श्रिये ॥ १ ॥

---

हिन्दूविश्वविद्यालयन्यायसाहित्याध्यापकसाहित्यव्याकरणाचार्य
पं० महादेवशास्त्रिपाण्डेयानाम्—

स्वस्तिनिस्तुपविपस्यवास्तवप्रस्तनस्तनितनिस्तुलस्तुति ।
स्तोभशस्तिविचकास्ति विस्तृतं वस्तु हस्तिमुखमस्तु वः श्रिये ॥ १ ॥

---

(१) शिरस्यारितकजनार्पितसिन्दूरं, सिन्दूरं नागसंभवमित्यमरः, (२) भुक्तदधिमण्डतुल्य-तुषरहितभक्तमिति यावत्—"मण्डं दधिभवं मस्तु" इत्यमरः, नातितिरोहितमितरत् ।

पं० गोपालशर्मणाम्—

शूर्पकर्णमहिराजहस्तकं ध्वस्तविघ्ननिचयं सुचित्तदम् ।
तस्तु हस्तिमुखमस्तु वः श्रिये कारणं भुवि समस्तसंपदाम् ॥१॥

---

स्याद्वादमहाविद्यालयीय विद्यार्थिराजकुमारजैनानाम्—

लोकलोचनचकोरचन्द्रिकाचित्तहारि शिवकारिविग्रहम् ।
मञ्जुभाविजितबालभास्करं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

स्याद्वादसंस्कृतमहाविद्यालयसाहित्यव्याकरणाध्यापक-
पं० सदाशिवशास्त्रिणाम्—

देववागमरवल्लरीश्रितं गण्डदेशललितालिगुञ्जनम् ।
स्वान्तसन्तमसहारि शर्मदं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

व्याकरणाचार्य थत्तेऽइत्युपाह्व पं० नरहरिशास्त्रिणाम्—

नुस्तमस्ततिहृतौ गभस्तिवत् पाशहस्तमपि मुक्तिदं परम् ।
आस्तिकस्तवनवास्तु निस्तुलं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

उदयप्रतापकालेजाध्यापक काव्यतीर्थं पं० जगमोहन झा शर्मणाम्—

मदलोलुभामथ च मञ्जुभाषिणीं भ्रमरावलिं दधदुदारगण्डयोः ।
उरुशस्तपस्त्यमखिलास्तिकोद्गतस्तुति वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

श्री १०८ काशिराजाश्रित साहित्याचार्य पं० ठाकुरप्रसादशर्मणाम्—

काशिकास्तिकजनैकसंस्तुत ! श्रीप्रशस्त ! रिपुमस्तकानम ! ।
काशिराज ! परितस्ततायते ! वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥
स्वस्ति भूरि जगतोऽस्ति नस्तथा प्रस्तरस्तरति त्वत्कृपाभरात् ।
पूज्यतेऽत्र मनुजैः शुभेषु यद् वस्तु हस्तिमुखमस्तु वः श्रिये ॥२॥

---

(१) नुः = नरस्य । (२) "गभस्तिः किरणे सूर्ये" इति मेदिनी ।
(१) मनोहरं गुञ्जन्तीम्, मञ्जुभाषिणीवृत्तं च ।

साहित्यशास्त्रिसाहित्यरत्न एम्० ए० गाडगिलोपाह्व-
पं० राजारामशास्त्रिणाम्—

इह वस्तुतः स्तुतसमस्तनास्तिकेतरशस्तनिस्तुलपदस्तदुस्तति ।
स्मृतवस्तुदस्तुति सुहस्तपुस्तकं ननु वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

( वैदेशिकानाम् )

चिकनौटावास्तव्य पं० "आनन्द" परमानन्दशास्त्रिविद्यावाचस्पतीनाम्—

नायकं च जगतो विनायकं विघ्नहृत् किमपि विघ्नकार्यपि ।
वर्ष्मणा मनुतनूजतां दधद् वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

चिकनौटास्थसनातनधर्म पुस्तकालयाध्यक्ष साहित्याचार्य-
पं० रामावतार मिश्र शास्त्रिणाम्—

अङ्कगामि गिरिजागिरीशयोः तत्त्वतोऽपरिचितं सुरैरपि ।
पङ्कखेलनपरैकमानसं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

चिकनौटास्थ वामदेव संस्कृतमहाविद्यालय प्रधानाध्यापक-
पं० विश्वेश्वर झा व्याकरणाचार्याणाम्—

अद्वयत्वमिव सूचयद्रदेनैककेन विमलेन तुन्दिलम् ।
सर्वतः प्रथमसमर्च्यमद्भुतं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥
स्वस्ति यत्पदपरागसेवनात् विन्दते सुकृतभाक् शरीरभाक् ।
विघ्नहारि सुरवृन्दवन्दितं वस्तु हस्तिमुखमस्तु वः श्रिये ॥२॥

---

पेटलादस्थश्रीनारायणसंस्कृतविद्यालयप्रधानाध्यापक वेदान्तव्याकरणतीर्थ-
पं० अमृतलालशर्मशास्त्रिणाम्—

विघ्नसन्तमससंहृविद्युत्तमं क्षेमधाम तरुणार्कसन्निभम् ।
मोदकप्रियमनन्तमोदकृद् वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

रीवां निवासि पं० सदाशिव शास्त्रि तैलङ्गानाम्—

श्रीगणेश इति नामकं जनैरादिपूज्यमिह सर्वकर्मसु ।
सर्वविघ्नहरणं शिवप्रदं वस्तु हस्तिमुखमस्तु वः श्रिये ॥ १ ॥

गयाजिलास्कूलहेडपण्डित साहित्याचार्य काव्यतीर्थसंस्कृतमणि
पं० हरिनन्दनभट्टानाम्—

ऋद्धिसिद्धिसमुपासितं लसद्भालचन्द्रमसुरौघमर्दनम् ।
विघ्नराशिदलनं सदा शिवं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥
जन्मिजाड्यभरदारणं जगज्जन्मरक्षणलयैककारणम् ।
एकदन्तमनुपाधि चिन्मयं वस्तु हस्तिमुखमस्तु वः श्रिये ॥२॥

---

छत्रपुरीय सबपोस्टमास्टर ( सी० आई० ) पं० विनायकरावभट्टानाम्—

यत्समस्तभुवनैकमङ्गलं विघ्नराशिपरिहारसाधनम् ।
सर्वसिद्धिकरणं च तत् प्रियं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

वेलगांववास्तव्य पं० बुर्ली श्रीनिवासाचार्याणाम्—

एकदन्तमपि तुन्दिलं महत् शूर्पकर्णमतिभद्रभाषणम् ।
विघ्नहर्तृ गणनायकं परं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

बेलगांववास्तव्य पं० गलगलीरामाचार्याणाम्—

शस्तदायि सुरमस्तकानतं त्रस्तभक्तभयहारिहस्तकम् ।
अस्तकारि च समस्तपाप्मनां वस्तु हस्तिमुखमस्तु वः श्रिये ॥

---

बीरगंजवासि पं० "शारदापदरेणु" चालिसे भैरवनाथशर्मसाहित्यशास्त्रिणाम्—

मातृसद्मगमनेच्छुकामुमामम्ब ! तत्र कुरु मा चिरं स्थितिम् ।
इत्थमाह यदधीरमाशु तद्वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥
अन्तरायनिचयस्य यन्मुहुर्भञ्जनाय हृदि रञ्जनं दधौ ।
मन्दहास्यरुचिरं चिराय तद्वस्तु हस्तिमुखमस्तु वः श्रिये ॥२॥

---

उज्जयिनीस्थमाधवकालेजाध्यापक व्याकरणाचार्य काव्यतीर्थ—
पं० गोपीकृष्णशास्त्रिणाम्—

ध्वस्तसर्वदुरितौघदानवं न्यस्तचेतसि नितान्तशान्तिदम् ।
त्रस्तभक्तजनरक्षणक्षमं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

वन्द्यपादयुगलं सुरासुरैर्विघ्ननिघ्नजनतापहारकम् ।
साध्यसिद्धिपरिपूर्तिकारकं वस्तु हस्तिमुखमस्तु वः श्रिये ॥२॥

---

जयपुरीयदादूमहाविद्यालयाध्यापक पं० दयारामशास्त्रिणाम्—
अन्तरायगिरिनाशनेऽशनिः शूर्पकर्णमथ मूषकासनम् ।
शस्तहस्तधृतमोदकं सदा वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

जयपुरीय पं० आत्मारामसाधूनाम्—
विघ्नभूरुहसमूहनाशनं प्राहि जाम्बवमनोहराशनम् ।
दक्षजाजमथ दक्षिणां धिये वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

ग्वालियरवासि पं० गङ्गाधर गोपाळ अटेरकराणाम्—
ऋद्धिबुद्धियुगलाभिसेवितं पावनं सकललोकपाऽवनम् ।
देवतर्षिकुलसंस्तुतं मुदा वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

उदगीरवासि सनातनधर्मसंस्थासंचालकशिरोळ इत्युपाह्व-
पं० अनन्ताचार्याणाम्—
यत्समस्तजनशस्तकारणं यन्निरस्त[1]मुनिरस्तशात्रवम् ।
तत् प्रशस्तधिषणाधिपस्तुतं[2] वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

उदगीरवासि पं० अण्णाचार्याणाम्—
वर्धकं भुवि समस्तसंपदां रक्षकं चरणपुष्करै[3]र्षिणाम् ।
नाशकं प्रतनधर्मभेदिनां[4] वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

सूरतवास्तव्य ज्यो० पं० कृष्णशङ्कर केशवराम रैक्वानाम्—
नागसंभवसमर्चिताङ्गकं प्रोल्लसच्छशिकलाङ्किमस्तकम् ।
निर्जरेशमुखपूजिताङ्घ्रिकं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

(१) निरस्तेन प्रहितवाणेन सुतरां निरस्ताः शात्रवाः येन तत् "निरस्तः प्रहिते वाणे" इत्यमरः । (२) विद्वद्वरस्तुतम् ।
(३) चरणकमलेच्छूनाम् । (४) सनातनधर्मभेदकर्तॄणाम् ।

गयावास्तव्यज्यौतिषालंकारव्याकरणज्यौतिषपुराणाचार्यकाव्यतीर्थसंस्कृतमणि-
पं० मध्येश्वरपाठकानाम्—

शैलराजसुतया विनिर्मितं द्वाररक्षणनियुक्तमद्भुतम् ।
शङ्करेण कृतविग्रहं लसद् वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

पण्ढरपुरीयम्युनिसिपलसंस्कृतपाठशालाप्रधानाध्यापक पं० पाण्डुरङ्गशास्त्रि-
शंकरशास्त्रिडेगवेकराणाम्—

स्वस्तये तु भजकस्य यत् स्थितं सत्वरं श्रितजनार्तिजित्वरम् ।
निस्तुलं विभवपस्त्यमेव तद् वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

जयपुरीयमहाराजासंस्कृतकालेजसाहित्याध्यापकसाहित्याचार्य कविरत्न-
पं० भट्ट श्रीतैलङ्गमथुरानाथशास्त्रिणाम्—

यत्प्रशस्तिरपहस्तिताऽशुभा[1] वस्तुतस्तुदति विघ्नविस्तरम् ।
तत् समस्तशुभवस्तुषु[2] स्तुतं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

गलगलीवास्तव्य पं० बी० बी० हुब्बलीकराणाम्—

यल्लिलेख किल कृष्णगीतिकां श्रीपराशरसुताज्ञयाऽग्रिमम् ।
मानमाप दिवि देवदुर्लभं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

बांदास्थगवर्नमेंटहाइस्कूलसंस्कृताध्यापकसहस्रबुध्युपाह्व-
पं० रघुनाथशास्त्रिणाम्—

न्यस्तसद्गुणमपास्तदुर्गुणं ध्वस्तपापमपहस्तिताशिवम् ।
शस्वभक्तसुमनस्तमोऽपहं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

गोरखपुरीयबालमुकुन्दलालहाइस्कूलाध्यापक बी० ए०
पं० राजारामशास्त्रिहोशिङ्गानाम्—

स्तोतुरस्तमितविघ्नसंहति ध्वस्तनास्तिकसमूहचेष्टितम् ।
मस्तकाञ्चितसुधांशुशस्तदं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

१ दूरीकृतम् अशुभं यया ईदृशी यस्य प्रशस्तिः । २ शुभवस्तुषु मङ्गलविषयेषु ।

बांदास्थगवर्नमेंटहाइस्कूलहेडपण्डितसाहित्याचार्य पेंढरकरोपाह्व-
पं० गोपीनाथशास्त्रिणाम्—

ज्ञानभानुमहसाऽविवेकभूगाढमोहतिमिरान्तकृन्नृणाम् ।
तुन्दिलं किमपि कान्तिनिस्तुलं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥
रोचनारुणितविग्रहत्विषा विघ्नसञ्चयमसंशयं दहत् ।
भक्तवृन्दसुखभुक्तिमुक्तिकृद्वस्तु हस्तिमुखमस्तु वः श्रिये ॥२॥

---

गोरक्षपुरमण्डलान्तर्गतपाण्डेयभठवाग्रामनिवासि पं० कमलाकान्तपाण्डेयानाम्—

नित्यमास्तिकजनोन्नतिप्रदं सूर्यकान्तिनिभसुन्दराननम् ।
स्मर्यमाणमनिशं च शर्वजं वस्तु हस्तिमुखमस्तु वः श्रिये ॥१॥

---

# समालोचनम्

## पञ्चतन्त्रम्—

श्रीमद्भिर्व्याकरणन्यायदर्शनाचार्यादिविविधबिरुदसमलङ्कृतैः नव्यग्रन्थप्रकाशनरसिकैः श्रीगुरुप्रसादशास्त्रिभिः सम्पादितं, "अभिनवराजलक्ष्म्या" ख्यया स्वकृतया टीकया सनाथीकृतं पञ्चतन्त्रसंस्करणमस्माभिरचिलक्ष्यीकृतं, सुसमालोचितं च । अद्य यावत् प्रकाशितचरेषु विविधेष्वेतदीयसंस्करणेषु प्रथत इदं संस्करणं केनाऽपि विशेषेण । प्राचीनेषु मुद्रितेषु पुस्तकेषु विविधाः पाठाः संकीर्णतया प्रचलिता आसन्, तांश्चात्र सम्यक् परिष्कृत्य, अर्थानुसंधानानुरोधेन मुद्रितवन्तः शास्त्रिपादाः । टीका च सूपयुक्ता व्युत्पित्सून्सरलया सरण्या ऽर्थमवगमयन्ती प्रशस्यताकोटिमाटीकते । अस्य पुस्तकस्य बाह्याकारोऽपि मनोहरतितराम् । सुचिक्कणपत्रेषु, शोभनाक्षरैः ( टाइप ) मुद्रणेन च भृशं राजतेतरां बाह्याकारप्रकारः । प्रकाशकः श्रीमान् भार्गव-पुस्तकालयाध्यक्षमहाशयो धन्यवादमर्हति सुप्रकाशनेन । श्रीमतो गुरुप्रसादशास्त्रिणः सहर्षमभिनन्दन्तो-

वयमस्य संस्करणस्य सुप्रचारं कामयामहे। अस्यैवंविधोपयोगिनः पुस्तकस्य मूल्यं ॥=) आणकमात्रम्। एवंविध पुस्तकप्राप्तिस्थानं—

भार्गव पुस्तकालय, गायघाट काशी।

## सनातनधर्म-सोपानम्

काशीस्थसारवाडीसंस्कृतविद्यालयाध्यापकैर्व्याकरणायुर्वेदशास्त्रिभिर्विशारदादिविरुदभूषितैः श्रीमद्भिः सत्यनारायणमिश्रमहोदयैर्महता प्रयत्नेन विरचितं सनातनधर्मसोपानाख्यं पुस्तकमधिगतमस्माभिः। इदं हि पुस्तकं सकलास्तिकप्रस्थानभेदानामवगमकं हिन्दीभाषयोपनिबद्धमन्तेवासिजनोपयोगि। अत्र गुरुशिष्यसंवादमुखेन शङ्कासमाधानप्रणाल्या तत्तद्दर्शनसिद्धान्ता हृदयङ्गमा अपि सारल्येन प्रतिपादिताः सन्ति। यथा च नातिक्लेशेन छात्रास्तत्त्वमवबुध्येयुः मुख्यः सिद्धान्तश्च सकलः प्रतिपादितः स्यात् तथा प्रयतितं सम्पादकेन। त्रयोदशभिरध्यायैः "धर्म-मीमांसा", "वेदमीमांसा," इति संज्ञया प्रत्यध्यायं तत्तद्विषयमीमांसा सम्यग् मीमांसिता वरीवर्ति। वेदमीमांसादौ वैदिकशाखाविभागो विशेषतया दर्शनीयो विस्तृतश्च विद्यते। दार्शनिकग्रन्थानामध्ययनात्पूर्वं तत्तद्दर्शनसिद्धान्तानां, तत्तदितिहासादीनां चावगमे विद्यार्थिनां समधिक उपकारोऽनेन पुस्तकेन सेत्स्यतीति सम्भावयामः। मूल्यमस्योपयोगिनः पुस्तकस्य आणकाष्टकमात्रम्। पुस्तकं चाऽधोलिखितेन संकेतेन लभ्यते—

मास्टर खेलाड़ीलाल एण्ड सन्स
संस्कृत बुकडीपो
कचौड़ीगली, काशी।

•नीतिमञ्जरी—श्रीद्याद्विवेदविरचिता सभाष्या।

ग्रन्थोऽयं संस्कृतक्षेत्रे सुतरामपूर्वतां भजते। सुभाषितवचनद्वारा वैदिकाख्यानपरिचायकस्यास्य ग्रन्थरत्नस्य विषये बहो: कालादुत्कण्ठितानां विदुषामनेन संस्करणेन परितोषः सुमहानुपकारश्च ध्रुवं भवेदिति वयं विश्वसिमः।

किञ्च प्राच्यप्रतीच्यवाङ्मयविशारदैर्विद्वद्वरैः प्रकृतग्रन्थरत्नसम्पादकैः श्रीसीताराम जयराम जोशी एम्० ए० साहित्यशास्त्राचार्यमहोदयैरस्मिन् संस्करणेऽपेक्षिताः सर्वेऽपि विषयाः सन्निवेशिताः। विश्वविख्यातवैदुष्यैर्हिन्दूविश्वविद्यालयोपकुलपतिभिः श्रीध्रुवमहोदयैः प्रसादीकृतेन प्राक्कथनेन सम्पादकमहोदयनिबद्धाभ्यां संस्कृतांग्लभाषाभूमिकाभ्यां च सनाथीकृतेयं नीतिमञ्जरी बाह्याभ्यन्तरसौरभसम्भारैरवश्यं धिनुयाद्रसिकानां मानसानीति सम्भावयन्तो वयमीदृशदुर्लभग्रन्थरत्नस्य सपरिष्कारं सम्पादने विहितभूरिपरिश्रमान् सम्पादकान्, सधन्यवादमभिनन्दामः, कामयामहे चास्य ग्रन्थरत्नस्य सुप्रचारम्। पुस्तकप्राप्तिस्थानम्—घाणेकर ब्रदर्स, १९ हाथीगली, बनारस सिटी, इति, मूल्यं ४॥) रूप्यकाणि।

---